बालार्क-वेदमन्दिरस्य प्रथमं पुष्पम्

*—ओ३म्—*

# शिक्षा-शास्त्रम्

(सर्वशास्त्रिपरीक्षोपयोगि)

चित्राचार्योपनाम्ना पण्डितजगदीशाचार्येण प्रणीतम्

प्रकाशिका

श्रीमती गायत्रीदेवी

अध्यक्षा—बालार्क-संस्कृतानुसंधानाश्रमः

वेदमन्दिर, महसी बाजार, बहराइच (उ०प्र०)

मुद्रकः

श्री सुरेन्द्र कुमार कपूर

रामलाल कपूर ट्रस्ट प्रेस, सोनीपत

प्रथम वार १०००

फाल्गुन सं० २०२५
दयानन्दाब्द १४५
फरवरी १९६९

अजिल्द ४-००
सजिल्द

# पण्डित-जगदीशाचार्य-प्रणीतानि

## शीघ्रं प्रकाश्यमाणानि पुस्तकानि

१. परमाणु-दर्शनम्—संस्कृतव्याख्ययोपेतम् ।

२. परमाणु-दर्शन—हिन्दी व्याख्या सहित ।

३. षट्कर्म-शास्त्रम्—चिकित्सोपयोगी ।

४. पाथेयम्—गीतिकाव्यम् ।

५. अरबी शिक्षा-शास्त्रम् ।

पुस्तक-प्राप्ति-स्थानम्—
अध्यक्ष—बालार्क-संस्कृतानुसन्धानाश्रमः
वेद-मन्दिर, महसी बाजार,
बहराइच (उ. प्र.)

# अध्यायाऽनुक्रमणिका



इत्यनुक्रमाणिका

# शुभ-कामना



सांख्ययोगव्याकरणायुर्वेदाचार्यस्य श्रीजगदीशचार्यस्य शिक्षाशास्त्रं मया मनोयोगेनादितोऽन्तपर्यन्तं दृष्टम् । हार्दिकी प्रसन्नता जाता । आशासेऽनेन नाना भ्रान्तयः शिक्षासम्बन्धिन्यः, अनेककुधारणाश्च निरस्ता भविष्यन्ति । तथा च नानाविषयेषु जनजागरूकता भविष्यति । नैतदुचितं यदात्मीयस्यास्य जगदीशाचार्यस्य स्वान्तेवासिनोऽधिकप्रशंसा क्रियेत । तथापि प्रशंसनीयकार्यस्य तु प्रशंसा करणीयैव । अतः कार्यमेतद् विद्वत्पाठकेभ्यः एवोत्सृजामि ये खलु नीरक्षीरविवेचने समर्थाः । लेखकस्य प्रयत्नस्तु सर्वतोभावेन श्लाघनीय इति ।

६-१२-१९६६

आयुर्वेदविश्वविद्यालय ३ झांसी । — लालचन्द्रो वैद्यः



श्रीमतश्चित्राचार्योपनामकस्य जगदीशाचार्यस्य शिक्षा-शास्त्रमवलोकितम् । प्राचीनेषु बहुविधेषु शिक्षाशास्त्रेषु सत्स्वपि स्वकीयमस्य महत्त्वं ग्रन्थदर्शनादनायासेनैव दृष्टिपथमायाति प्राचीनाचार्याणां ये सूत्ररूपाः संक्षिप्ता अर्था आसन्, तेऽत्र विशदीकृत्य प्रकाशिताः । बहुत्र च प्राचीनाचार्याणां मतान्यपि निराकृतानि, वास्तविकं च स्थानप्रयत्नादिकं प्रत्यपादि, उच्चारणदोषा लिपिदोषाश्च निराकृताः । पूर्वमतनिराकरणप्रकरणे यमानां जिह्वामूलीयोपध्मानीययोर्ळकारळहकारयोश्चाप्यवास्तविकत्वं प्रतिपादितम्, तत्र शिक्षाशास्त्रविदां वैमत्यं भवितुमर्हति (अस्माकमप्यस्ति तत्र मतभेदः) तथापि वर्णानां शुद्धोच्चारणनिदर्शनाय योऽयं ग्रन्थकृता प्रयत्नो विहितः, सोऽस्मिन् काले वस्तुतः श्लाघनीयः । तत्रापि च गीर्वाणवाणीनिबद्धत्वादयं प्रयत्नः श्लाघनीयतरः संवृत्तः ।

पाणिनिमहाविद्यालयः — विदुषां वशंवदः

मोतीझील, वाराणसी — युधिष्ठिरो मीमांसकः



इदं शास्त्रं मया दृष्टमपूर्वार्थंप्रदर्शकम् । वैज्ञानिकं क्रमं प्रमाणीकृत्य सम्प्रदायोऽत्र खण्डितः । बहवस्तर्कभेदाश्च स्वोपज्ञाः सम्प्रदर्शिताः । अन्धानुकरणत्यागे स्वोत्साहश्चानुदर्शितः । तदिदं परिपश्यन्तु नीरक्षीरविवेकिनो हंसा इव बुधोत्तंसा युक्तायुक्तविभागशः ।

रघुनाथशर्मा
भूतपूर्व वेदान्तविभागाध्यक्ष
सं० वि० वि० वाराणसी

२१-१०-६६
छाता, बलिया



कल्पितं तु व्याकरणं प्रकृत्यादिप्रकल्पनात् ।
वर्णा उच्चारणं तेषां विज्ञेयं किन्त्वकल्पितम् ॥१॥
अभ्राणीव प्रचीयन्ते शब्दाख्याः परमाणवः ।
ते शब्दाः परमाणुत्वाद् वर्णा एव न संशयः ॥२॥
पदवाक्यप्रभेदस्तु भाषासु परिदृश्यते ।
वर्णभेदस्त्रिकालेऽपि नो दृष्टो न तु सम्भवः ॥३॥
वर्णोच्चारणविज्ञानं सरहस्यमनुत्तमम् ।
गुरुज्ञानाम्बुधेर्नीत्वा जिज्ञासुभ्यः प्रकाश्यते ॥४॥
तत्र संक्षिप्य साधूक्तं भट्टोजीदीक्षितेन वै ।
ज्ञानाय व्याकृतेः पूर्वं विज्ञानार्थं त्विदं पठेत् ॥५॥
अङ्गमेतत् परित्यक्तं दृश्यते किल साम्प्रतम् ।
विद्वद्भिर्नोचितं यच्च तस्माद् उद्ध्रियते मया ॥६॥

जगदीशः

४-६-६७ सांख्ययोगव्याकरणायुर्वेदाचार्यः

# * समर्पणम् *

यस्माद्वर्णसमाम्नायं गुरोरहमधिगतः ।
सैकन्दरपुरीयं तं लालताप्रसादं नतः ॥
दण्डाघातैः कराघातैः श्रवणपाल्पाकर्षणैः ।
दत्तं ज्ञानामृतं येन तस्मै चोत्सृज्यते मया ॥
ऋषिरामस्तु शास्त्री मे प्रथमः संस्कृतगुरुः ।
बालार्कब्राह्मणीपूरा-निवासी तं नमाम्यहम् ॥
रामकृपालुः पाण्डेयो द्वितीयः संस्कृतगुरुः ।
बालार्कगुदड़ीवासी तस्मै चापि नमो नमः ॥
राजारामश्च पाण्डेय आचार्यो मे महानघः ।
मरौंचाग्राम-वास्तव्यस्तस्मै प्रणतयो मम ॥
एतावन्तस्तु गुरवः प्राथमिकास्तपस्विनः ।
ग्रन्थारम्भे नतोऽहं तान् मंगलार्थं पुनः पुनः ॥

जगदीशः
भूतपूर्वप्रधानचार्यः
सार्वभौमसंस्कृतमहाविद्यालय, झांसी

*—ओ३म्—*

# शिक्षा-शास्त्रम्

## अथ सामान्यविज्ञानीयनामा

### प्रथमोऽध्यायः

१. तत्र मुक्तिरेव परमं पदम् ।

२. तदर्थं एव प्रयत्नः परमः पुरुषार्थः ।

३. ऋते करणविगमान्न मुक्तिः ।

४. ऋतेऽभ्यासान्न करणविगमः ।

५. ऋते ज्ञानान्नाभ्यासः ।

६. ऋते वेदाध्ययनान्न ज्ञानम् ।

७. चत्वारो वेदा ऋग्यजुःसामाथर्वाणः ।

८. ऋते वेदाङ्गाध्ययनान्न सम्यग्वेदार्थावगतिः ।

९. षडाङ्गानि वेदानाम्--शिक्षा व्याकरणं निरुक्तं छन्दः कल्पो ज्योतिषञ्चेति ।

१०. प्रधानञ्च षट्स्वङ्गेषु व्याकरणम् ।

११. न तज्ज्ञानेन विनान्याङ्गाध्ययनसाफल्यम् ।

१२. ऋते वर्णस्थानप्रयत्नज्ञानान्न व्याकरणाध्ययनम् ।

१३. ऋते विशुद्धवर्णोच्चारणज्ञानाभ्यासाभ्यां न सम्यग्वेद-पाठाभ्यासः ।

१४. ऋते सम्यक्पाठान्न तदर्थावगतिः ।

१५. तदर्थमध्येया शिक्षा ।

१६. शिक्ष्यन्ते वर्णाः शिक्ष्यते च तदुच्चारणविधिर्यया सा शिक्षेति विज्ञेया षट्स्वङ्गेषु प्रथममङ्गं प्रथमा च विद्येति ।

१७. तज्ज्ञापकमेव शास्त्रं शिक्षा-शास्त्रम् ।

इति प्रथमोऽध्यायः

# अथोच्चारणविज्ञानीयनामा

## द्वितीयोऽध्यायः

१. आत्मा बुद्ध्या समेत्यर्थान् मनो युङ्क्ते विवक्षया ।
मनो मस्तिष्कमाहन्ति तच्च संकोचयत्युरः ॥१॥

२. संकोचाद्वक्षसो वायुः प्रेर्यते फुप्फुसाद् बहिः ।
प्रणाल्या कण्ठमागत्य मन्द्रं जनयति स्वरम् ॥२॥

३. अकारः प्रोच्यते त्वाद्य उकारश्चान्तिमः स्वरः ।
मकारो व्यञ्जनान्तस्तु येषु वर्णाः समन्विताः ॥३॥

४. अकारादिर्मकारान्तः सर्वो वर्णसमुच्चयः ।
तस्मादो३मक्षरं ब्रह्म यस्मात्किञ्चिद् बहिर्न वै ॥४॥

५. नास्ति ब्रह्म परं वाच्यमो३ङ्कारान्न च वाचकः ।
तस्मादो३म् ब्रह्मणो नाम कीर्तितञ्च मुनीश्वरैः ॥५॥

६. शेषनामानि संत्यज्य वाचकान्यखिलानि च ।
अत एवोक्तं श्रुतिभिः प्रणवस्तस्य वाचकः ॥६॥

७. प्रकर्षेण नवं यस्मादिदं तिष्ठति शाश्वतम् ।
तस्मादो३म् पदं प्रणवमुपनिषद्भिः कीर्तितम् ॥७॥

८. मुखं हि कोष्ठं वर्णानां मध्यमावैखरीकृताम् ।
मनसि पश्यन्तीवर्णाः परावर्णा निजात्मनि ॥८॥

९. आत्मनस्तु परा वाणी पश्यन्ती मनसः स्मृता ।
विज्ञेया मध्यमोपांशुर्वैखरी नादसंज्ञिता ॥९॥

१०. वाणीत्रयं स्वसंवेद्यं वैखरी व्यवहारभाक् ।
इत्येतावत्तु विज्ञेयो वाणीनां समुपक्रमः ॥१०॥

११. आद्यं द्वयं ज्ञप्तिरूपं मध्यमा ज्ञानगोचरा ।
वैखरी व्यवहारे तु परज्ञानार्थमुच्यते ॥११॥

१२. गलं तु प्रथमं द्वारं द्वितीयं चौष्ठमुच्यते ।
तृतीयं नासिका द्वारमनुनासिक्ययोगकृत् ॥१२॥

१३. अक्षरं न क्षरं यस्य तस्मात्तद् ब्रह्म वर्ण्यते ।
विनिस्सृत्य मुखादेतदाकाशं व्याप्य तिष्ठति ॥१३॥

१४. तदक्षरं ब्रह्म परं पवित्रं गुहाशयं सम्यगुशन्ति विप्राः ।
तच्छ्रेसा चाभ्युदयेन चैव सम्यक्प्रयुक्तं पुरुषं युनक्ति ।१४।

१५. उच्छ्वासेनैव च व्यक्तिर्वर्णानामिह जायते ।
निःश्वासस्तु विशत्यन्तस्तस्मान्नोच्चारणे हितः ॥१५॥

१६. यावच्च तिष्ठत्युच्छ्वासस्तावदेवाक्षरश्रुतिः ।
स्थानान्तरेषु सम्प्राप्तस्तत्तद्वर्णस्य वाहकः ॥१६॥

१७. इत्युच्चारणविज्ञानं वेत्ति यो भुवि मानवः ।
स कृत्स्नं शास्त्रमध्येति मुक्तिमाप्नोति चान्ततः ॥१७॥

इति द्वितीयोऽध्यायः

# अथ वर्णविज्ञानीयनामा

## तृतीयोऽध्यायः

१. वर्णोऽक्षरमिति पर्यायौ ।

२. त्रिविधास्ते स्वरायोगवाहव्यञ्जनाख्याः ।

३. स्वेन रूपेणान्यवर्णसाहाय्येन विनैवोच्चार्यमाणा राजन्त इति स्वराः । अन्यवर्णसाहाय्येन विनैवोच्चार्यन्त इति भावः ।

४. स्वयमेव राजन्त इति स्वरा इति पतञ्जलिः ।

५. अयोगेन वहतीत्ययोगवाहः ।

६. आभ्यामन्ये व्यञ्जनानि स्वरसाहाय्यापेक्षीणि ।

७. व्यञ्जयन्ति स्फोटात्मकशब्दस्वरूपाणीति व्यञ्जनानि । अन्वग्भवति वा व्यञ्जनम् इति स्वरसाहाय्यमपेक्ष्यैव व्यक्तिरित्यर्थः ।

८. अ इ उ इति मूलस्वराः स्वाभाविकाः ।

९. ए ऐ ओ औ इति संयुक्तस्वराः ।

१०. ऋ ऌ इति कृत्रिमौ स्वरौ । ऌ स्थाने लीत्युच्चरणीयम् ।

११. अं अः इत्यनुस्वारविसर्गौ त्वयोगवाहौ ।

१२. कु चु टु तु पु य र ल व श ष स हा व्यञ्जनानि ।

१३. इति वर्णराशिः ।

१४. अ इ स्वराभ्यामेकारः ।

१५. अ ए स्वराभ्यामैकारः ।

१६. अ उ स्वराभ्यामोकारः ।

१७. अ ओ स्वराभ्यामौकारः ।

१८. तत्र ए ओ इति विवृतरौ, ऐ औ इति तु विवृततमौ ।

१९. द्विवर्णानि सन्ध्यक्षराणीति चापिशलिः ।

२०. द्वे द्वे वर्णौ सन्ध्यक्षराणामारम्भके इति च पाणिनिः । तेनैवेकारोकारयोः स्वरे यकारवकारादेशत्वादेचाम-यवायावो भवन्ति ।
एकारौकारयोरेकह्रस्वाकारत्वादयवौ तथा चैकारौकार-योर्ह्रस्वाकारद्वयादायावौ भवत आदेशाविति रहस्यम् ।

२१. स्वरे इकार एव यकारः ।

२२. स्वरे उकार एव वकारः ।

२३. स्वरे ऋकार एव रकारः ।

२४. स्वरे ऌकार एव लकारः ।

२५. य र ल व श ष स हा अवर्गीयाः ।

२६. अनुस्वारविसर्गौ त्वयोगवाहौ । अयोगेनैव वहतः कार्य-मिति आश्रयस्थानभागिनौ ।

२७. मूलस्वरद्वयसंयोगाद् द्विमात्रिकत्वाद्ध्रस्वाभाव एव संयुक्तस्वरेषु ।

२८. छन्दोगाः सात्यमुग्रिराणायनीयास्तु ह्रस्वमेकारं ह्रस्व-मोकारञ्च क्वचित् पठन्ति । तत्र तेषां तु सम्प्रदाय एव शरणम् । न तु लोके वेदे वा तथा दृश्यते ।

२९. लोकेऽपि तथाश्रुतिरयुक्तैव संवृतत्वदोषात् ।

३०. सात्यमुग्रिराणायनीयानां मते तु विवृततमयोरेष संवृतत्व-दोषो न तु विवृततरयोरिति ।

३१. कालतस्त्रिधा मूलस्वराः, ह्रस्वदीर्घप्लुताः ।

३२. ऋऌकारावपि तथा ।

३३. ऌकारस्तु द्विधैव दीर्घाभावादिति पाणिन्यादयः ।

३४. ऌवर्णोऽपि दीर्घ इति वाजसनेयिनां मतमेव युक्तम् ।

३५. उदात्तादिभेदेन पुनस्त्रिधा इति नवधा ।

३६. अनुनासिकाश्चापीत्यष्टादशधा ते ।

३७. संयुक्तस्वरा द्वादशधा ह्रस्वाभावात् ।

३८. सरेफ ऋवर्णः, सलकारश्च ऌवर्णः । तयो रि लि इत्यनुकृतिरूपोच्चारणं साध्विति तत्र भवन्तो युधिष्ठिरमीमांसकाः ।

३९. इकारोऽनयोरज्भक्तिरुदीच्यानाम् ।

४०. उकारोऽत्राज्भक्तिरिति दाक्षिणात्याः ।

४१. कृत्रिमत्वादेव भेदोऽयम् ।

४२. ऋऌवर्णौ रेफलकारसंश्लिष्टावश्रुतिधरावेकवर्णाविति च—ऋक्प्रातिशाख्यम् ।

४३ अ इ उ ए ऐ ओ औ इति सप्तैव स्वराः ।

४४. त एव कालतः सप्तदश भवन्ति ।

४५: ऋ ऌ इति च षड् भवन्ति ।

४६. अं अः इत्येतौ द्वौ,

४७. क ख ग घ ङ

च छ ज झ ञ

ट ठ ड ढ ण

त थ द ध न

प फ ब भ म

इति पञ्चविंशतिः, पञ्च वर्ग्याः,

४८. य र ल व श ष स ह इत्यवर्गीया अष्टौ ।

४९. इति चतुश्चत्वारिंशदष्टपञ्चाशद्वा वर्णा विज्ञेयाः ।

५०. यमास्तु खपुष्पवत् शशशृङ्गवद्-वन्ध्यापुत्रवद्वा ज्ञेयास्तेषां सर्वथाभावात् ।

५१. जिह्वामूलीयोपध्मानीयळकारळहकारा अपि तथैव ।

५२. ननु सन्ध्यक्षराणान्तु द्वेद्वे वर्णौ समारम्भके भवत इति कृत्वा ह्रस्वत्वाभावः, किन्तु लृकारस्य दीर्घत्वाभावे को हेतुः ?

५३. मैवम्, लृकारस्य दीर्घत्वं त्वस्त्येव। अत एव पाणिन्यादयोऽपि क्वचित् स्वीकुर्वन्त्येव। तस्य दीर्घत्वाभावे साम्प्रतिकसंस्कृतवाङ्मये तस्याश्रवणमेव हेतुः। तत्र 'ऋलृ, वर्णयोर्मिथः सावर्ण्यं वाच्य'मिति कृत्वा लृवर्णस्य दीर्घविधौ दीर्घ ॠकारो विधीयते। अतएव दीर्घ लृकारः सर्वथोच्छिन्न एव किञ्चित्कालात्। तदत्यन्ताभावप्रतिपादकं पाणिन्यापिशलादीनां मतं त्वसाम्प्रतमेव। प्लुतश्चेत् स्वीकर्तुं शक्यते दीर्घत्वे का बाधा ? नेत्यर्थः, वस्तुतस्तु सरेफ ऋवर्ण इव सलकार लृवर्णोऽपि वक्तव्यः। तथा च ऋ (रि) वत् लृवर्णोऽपि लि एवोच्चारणीयः, दीर्घश्चापि स्वीकार्यः।

इति तृतीयोऽध्यायः

# अथ स्थानविज्ञानीयनामा

## चतुर्थोऽध्यायः

१. यत्र वर्णा व्यङ्ग्यत्वेन तिष्ठन्ति तत्स्थानम् ।

२. षडेव स्थानानि वर्णानां नाष्टाविति । तद्यथा—कण्ठः, तालु, मूर्धा, दन्ताः, ऊर्ध्वौष्ठः,नासिका चेति पौर्वापर्येण क्रमशः ।

३. ओष्ठाविति त्वसाम्प्रतमूर्ध्वौष्ठस्यैव स्थानत्वं स्थानपङ्क्तौ स्थितत्वात् अन्यस्थानमिव स्थिरत्वाच्च ।

४. कण्ठादूर्ध्वौष्ठपर्यन्तं तु स्थानपङ्क्तिरूर्ध्वम् ।

५. जिह्वामूलादधरोष्ठपर्यन्तं करणपङ्क्तिरधः ।

६. कण्ठे एव जिह्वामूलं तदापि न जिह्वामूलं स्थानं करणमात्रत्वात् ।

७ नचोरःस्थानं वर्णानाम्, मुखात् तस्य बाह्यत्वात् ।

८. तस्मान्नौरसा वर्णाः ।

९. हविसर्जनीयावुरस्यावित्येकेषां मतमयुक्तम् ।

१०. महाप्राणप्रयत्नसाध्यत्वादेव तयोरुच्चारणे उरसि सङ्कोचविशेषो भवति, न तु तत्स्थानम् ।

११. नापि परापश्यन्तीकृताः, नापि मध्यमावैखरीकृता वा वर्णा औरसाः, उरसि वाण्यभवात् ।

१२. फुप्फुसौ वक्ष एवात्रोरः शास्त्रे ।

१३. आत्ममनसोस्तु क्रमशः परापश्यन्तीवाण्यौ ।

१४. मध्यमावैखरीवाण्यौ तु मुखस्यैव ।

१५. तत्र अकुहविसर्जनीयानां कण्ठः ।

१६. इचुयशानां तालु ।

१७. ऋटुरषाणां मूर्धा ।

१८. लृतुलसानां दन्ताः ।

१९. उपुवकाराणामूर्ध्वौष्ठम् ।

२०. ङ-ञ-ण-न-मानां नासिका च
(चात् स्वस्थानान्यपि ज्ञेयानि) ।

२१. अनुस्वारस्य नासिकैव ।

२२. वकारस्य सृक्विणी एव ।

२३. सृक्विणी नामूर्ध्वौष्ठस्यान्तस्तलम् ।

२४. दन्तौष्ठमिति त्वयुक्तमेव ।

२५. अधरौष्ठस्य करणत्वाद् दन्ता एव स्थानं वकारस्यापि स्यात्, तेन यथासंख्येन उकारस्य वकारादेशो न सिद्ध्यति । दन्तस्पर्शात् स्थानभ्रष्टत्वदोषो जायते । शुद्धस्त्वौष्ठ्य एव ।

२६. एदैतोः कण्ठतालु, कण्ठ्यतालव्यवर्णयोगात् ।

२७. ओदौतोः कण्ठौष्ठम्, कण्ठ्यौष्ठ्यवर्णसंयोगात् ।

इति चतुर्थोऽध्यायः

# अथ प्रयत्नसामान्यविज्ञानीयनामा

## पञ्चमोऽध्यायः

१. वर्णोच्चारणार्थं प्रयतनं प्रयत्नः ।

२. स द्विविधः आभ्यन्तरो बाह्यश्चेति ।

३. तत्र मुखस्याभ्यन्तरे जिह्वादिभिः कृतं प्रयतनमन्तः-प्रयत्न आभ्यन्तरप्रयत्नो वोच्यते ।

४. जिह्वादिरूपकरणेभ्यो भिन्नैः कृतं प्रयतनं बाह्यप्रयत्नः ।

इति पञ्चमोऽध्यायः

# अथान्तःकरणविज्ञानीयनामा

## षष्ठोऽध्यायः

१. तत्र प्रयत्नसाधकं साधनं करणम् ।

२. तस्मादन्तःप्रयत्नसाधकं साधनमन्तःकरणम् ।

३. द्वे चान्तःकरणे जिह्वाधरौष्ठे ।

४. तत्र चतुर्धा विभक्तं जिह्वाकरणम्—जिह्वामूलम्, जिह्वामध्यम्, जिह्वोपाग्रम् जिह्वाग्रमिति ।

५. तत्र कण्ठ्यानां वर्णानां जिह्वामूलं करणम् ।

६. तालव्यानां जिह्वामध्यम् ।

७. मूर्धन्यानां जिह्वोपाग्रम् ।

८. दन्त्यानां जिह्वाग्रमिति ।

९. ओष्ठ्यानामधरौष्ठम् ।

१०. वकारस्यापि चौष्ठ्यत्वादधरौष्ठमेव ।

११. सृक्विण्या ऊर्ध्वौष्ठावयवत्वात् ।

१२. तत्राधरौष्ठस्य करणत्वमथर्वप्रातिशाख्यंकारः शौनकोऽप्याह—ओष्ठ्यानामधरौष्ठमिति ।

इति षष्ठोऽध्यायः

# अथ बाह्यकरणविज्ञानीयनामा

## सप्तमोऽध्यायः

१. तत्र बाह्यप्रयत्ने द्वे करणे उरःकण्ठौ ।

२. तत्रोरसोऽल्पसंकोचादल्पप्राणप्रयत्नोऽभिनिर्वृत्तो भवति, अल्पवायुसरणात् ।

३. उरसोऽतिसंकोचान्महाप्राणप्रयत्नोऽभिनिर्वृत्तो भवति, बहुवायुसरणात् ।

४. कण्ठस्यासंकोचादेव विवारश्वासाघोषाः स्वाभाविकास्त्रयः ।

५. कण्ठस्य संकोचादेव संवारनादघोषा अस्वाभाविकास्त्रयः ।

६. कण्ठस्यासंकोचादेवानुदात्तत्वम् ।

७. कण्ठस्य संकोचादेवोदात्तत्वम् ।

८. उभयोः सन्निपाते मध्यप्रयत्नत्वात् स्वरितत्वमिति ।

इति सप्तमोऽध्यायः

# अथान्तःप्रयत्नविज्ञानीयनामा

## अष्टमोऽध्यायः

१. चतुर्धान्तःप्रयत्नः—स्पृष्टम्, ईषत्स्पृष्टम्, ईषद्विवृतम् विवृतं चेति ।

२. ह्रस्वाकारस्य तु संवृतमिति पञ्चमोऽपि पाणिन्यादीनाम् ।

३. प्रागन्त्यसूत्रकार्याद् विवृतत्वमेव तेषां व्याकरणप्रक्रियायां सवर्णसिद्ध्यर्थं प्रतिज्ञायते, तेन दीर्घत्वसिद्धिर्भवति ।

४. तत्र स्थानैः सह करणस्य स्पर्शात् स्पृष्टप्रयत्नः ।

५. स्थानैः सह करणानामीषत्स्पर्शादीषत्स्पृष्टप्रयत्नः ।

६. स्थानकरणयोः सामीप्यमात्रमीषद्विवृतप्रयत्नः ।

७. स्थानकरणयोर्मध्येऽसामीप्यं विवृतप्रयत्नः ।

८. कण्ठस्य संकोचात् संवृतप्रयत्नोऽपि पञ्चमः ।

९. तत्र कु-चु-टु-तु-पूनां पञ्चवर्गीयाणामुच्चारणे करण-स्थानयोः परस्परं स्पर्शो जायतेऽत इमे कादयो मा-वसानाः पञ्चविंशतिवर्णाः स्पर्शाख्याः ।

१०. ईषत्स्पर्शत्वादन्तःस्थितत्वाद् यरलवा अन्तःस्थाः ।

११. स्थानकरणयोः सामीप्यमात्रत्वाद् वायुवेगाधिक्यात् केषाञ्चिद् वातावरोधादूष्मा प्रजायतेऽत ऊष्माख्याः शष-सहा इति ।

१२. तत्र स्पृष्टप्रयत्नः स्पर्शानाम् ।

१३. ईषत्स्पृष्टप्रयत्नोऽन्तःस्थानाम् ।

१४. ईषद्विवृतमूष्माणाम् ।

१५. विवृतं स्वराणाम् ।

१६. संवृतमकारस्येति पाणिन्यादयः ।

१७. एङ्गाञ्चेति केचित् ।

१८. अनुस्वारविसर्गयोस्तु तदाश्रयवर्णप्रयत्नाः ।

इत्यष्टमोऽध्यायः

# अथ बाह्यप्रयत्नविज्ञानीयनामा
## नवमोऽध्यायः

१. तत्रैकादश बाह्यप्रयत्नास्तद्यथा —उदात्तानुदात्तस्वरितास्त्रयो, विवारश्वासाघोषास्त्रयः, संवारनादघोषास्त्रयोऽल्पप्राणमहाप्राणौ द्वौ चेति ।

२. तत्रोदात्तानुदात्तस्वरितास्त्रयः स्वराणामेव सर्वेषाम् ।

३. शेषा अष्टौ विवारादयो व्यञ्जनानामेव ।

४. तत्रोच्चैरुच्चारणमुदात्तप्रयत्नः ।

५. नीचैरुच्चारणमनुदात्तप्रयत्नः ।

६. नात्युच्चैर्नातिनीचैरपि तूभयोः समाहारेण सामान्योच्चारणं स्वरितप्रयत्नः ।

७. प्रत्येकं हि स्वरस्त्रिधैवोच्चार्यते—उच्चैर्नीचैः सामान्येन चेति ।

८. तस्मात्प्रत्येकं स्वरस्य ह्रस्वस्य दीर्घस्य प्लुतस्य चोदात्तानुदात्तस्वरितास्त्रयस्त्रयः प्रयत्नाः ।

९. यथोच्चारणचिकीर्षा स एवोदात्तः स एवानुदात्तः स एव स्वरितः क्रियते ।

१०. तत्र प्रधानार्थक उदात्तो गौणार्थकोऽनुदात्त उभयार्थकः स्वरितः । तद्यथा लोकेऽपि जलमानय, आनय जलमिति ।

११. अथ व्यञ्जनानां बाह्यप्रयत्नविषये तूच्छ्वासो नाम प्राणवायुः फुप्फुससंकोचादूर्ध्वमाक्रामन्मूर्ध्नि प्रतिहतो निवृत्तो यदा कोष्ठमभिहन्ति तदा कोष्ठेऽभिहन्यमाने गलबिलं कदाचित् विवृतं कदाचित् संवृतं भवति ।

१२. विवृतञ्चेद् गलबिलं विवारप्रयत्न उच्यते ।

१३. संवृतञ्चेद् गलबिलं संवारप्रयत्न उच्यते ।

१४ इति विवारसंवारौ परस्परं विरुद्धौ द्वौ ।

१५. येषां विवारो न तेषां संवारप्रयत्नो येषां खलु संवार-प्रयत्नो न तेषां विवारप्रयत्न इति लाभः ।

१६. यदा गलबिलस्य विवृतत्वं तदा मार्गावरोधाभावाच्छ्वासो जायते । श्वासादघोषश्चैवेति त्रयोऽपि सहभाविनः ।

१७. अतो येषां विवारप्रयत्नस्तेषां श्वासाघोषावपीति लाभः ।

१८. यदा गलबिलस्य संवृतत्वं तदा मार्गावरोधादर्थाद् गलबिलस्य सङ्कुचितत्वान्मुरलीवन्नाद एव जायते नादाच्च घोष एवेति त्रय इमेऽपि सहभाविनः ।

१९. अतो येषां संवारप्रयत्नस्तेषामेव नादघोषावपीति लाभः ।

२०. इति विवारश्वासाघोषा एको गणः ।

२१. संवारनादघोषा द्वितीयो गणः ।

२२. परस्परं विरुद्धो चैतौ गणौ ।

२३. विवारादिगणः स्वाभाविकोऽपरश्च किञ्चिदस्वाभाविक एव भूरिप्रयत्नसाध्यत्वात् ।

२४. विवारादनु श्वासः संवारादनु नादो जायते दीयते वा तस्माद् द्वाविमौ श्वासनादावनुप्रदानावुच्येते ।

२५. न श्वासादनु अघोषो नादादनु घोषो वा जायतेऽपि तु सहैव तस्मान्नेमावनुप्रदानावित्युच्येते महर्षिभिरिति विस्तरः ।

२६. नहि श्वासाघोषौ सर्वथा नादरहितावपि तु हीनध्वनि-युक्ताविति ज्ञेयं श्वासपूर्वकमेवोपलब्धेः कचटतपखछठ-थफानां श्वासाघोषौ च ।

२७ न वा नादघोषौ श्वासरहितावपि तु नादपूर्वकमेवोप-लब्धेस्तृतीयचतुर्थपञ्चमानां नादघोषाविति रहस्यम् ।

२८. यदोच्चारणे वायुवेगोऽल्पः सोऽल्पप्राणः ।

२९. यदोच्चारणे वायुवेगो महान् स महाप्राणः ।

३०. एतावपि परस्परं विरुद्धौ ।

३१. येषामल्पप्राणो न तेषां महाप्राणः। येषाञ्च महाप्राणो न तेषां वर्णानामल्पप्राणप्रयत्न इति लाभः ।

३२. तत्राल्पप्राणोऽपि स्वाभाविको महाप्राणस्तु किञ्चिद-स्वाभाविकः पूर्ववदेव ज्ञेयः ।

३३. तस्मात्प्रत्येकं व्यञ्जनस्य बाह्यप्रयत्नविवेके विचार्यते विवारादिर्गणो वा संवारादिर्गणो वाऽस्य ।

३४. ततोऽल्पप्राणो वा महाप्राण इति ।

३५. तस्माच्चत्वारश्चत्वारः प्रयत्ना व्यञ्जनानां भवन्तीति लाभः ।

३६. तत्र वर्गाणां प्रथमद्वितीयवर्णानां शषसानाञ्च विवार-श्वासाघोषाः ।

३७. वर्गाणां तृतीयचतुर्थपञ्चमवर्णानां हयरलवानाञ्च संवारनादघोषाः ।

३८. पुनश्च वर्गाणां प्रथमतृतीयपञ्चमवर्णानां यरलवानाञ्चाल्पप्राणप्रयत्नश्चतुर्थः ।

३९. तथा च वर्गाणां द्वितीयचतुर्थवर्णानां शषसहानाञ्च महाप्राणप्रयत्नश्चतुर्थः ।

इति नवमोऽध्यायः

# अथोदात्ताद्युच्चारणविज्ञानीयनामा दशमोऽध्यायः

१. तत्राहाचार्यापिशलिर्नाभितलप्रकरणे विंशतितमे सूत्रे—"यदा सर्वाङ्गानुसारी प्रयत्नस्तीव्रो भवति तदा गात्रस्य निग्रहः कण्ठबिलस्य चाणुत्वं स्वरस्य च वायोस्तीव्रगतित्वाद्रौक्ष्यं भवति तमुदात्तमाचक्षते" इति ।

२. "यदा तु मन्दः प्रयत्नो भवति तदा गात्रस्य स्रंसनं कण्ठबिलस्य महत्त्वं स्वरस्य च वायोर्मन्दगतित्वात्स्निग्धता भवति तमनुदात्तमाचक्षते" इत्येकविंशे सूत्रे ।

३. "उदात्तानुदात्तसन्निपातात्स्वरितः" इति च द्वाविंशे सूत्रे ।

४. तदेतैरुदात्तानुदात्तस्वरितोच्चारणविज्ञानमुक्तं वेदितव्यम् ।

इति दशमोऽध्यायः

# अथ स्थानपीडनविज्ञानीयनामा

## एकादशोऽध्यायः

१. तत्र स्पर्शवर्णानामुच्चारणे तूच्छ्वासो नाम प्राणवायुर्लौहपिण्डवत्स्थानमभिपीडयति ।

२. अन्तःस्थवर्णानामुच्चारणे स एव प्राणवायुः काष्ठपिण्डवत्स्थानमभिपीडयति ।

३. ऊष्मवर्णकारो हि स एव प्राणवायुरूर्णापिण्डवत्स्थानमभिपीडयति ।

४. स्वरवर्णकारो हि स प्राणवायुः शाल्मलिफलोद्भूतकार्पासपिण्डवत्स्थानमभिपीडयति । मृदुतमस्पर्श इति भावः, विवृतत्वात् । नहि सर्वथा स्पर्शाभावे स्थाने वर्णोपलब्धिः ।

५. संवृतवर्णकारो हि काष्ठपिण्डवदेव पीडयति ।

६. तत्र स्थानकरणयोः सम्यक्स्पर्शात्कठिनाभिघाताल्लौहपिण्डवदल्पकठिनाभिघातादीषत्स्पर्शात् काष्ठपिण्डवदीषद्विवृतत्वादकठिनस्पर्शादूर्णापिण्डवद् विवृतत्वान्मृदुस्पर्शाच्छाल्मलिफलोद्भूतकार्पासपिण्डवदभिघातो भवति वायोरिति रहस्यम् ।

इत्येकादशोऽध्यायः

# अथ वर्णदेवताविज्ञानीयनामा

## द्वादशोऽध्यायः

१. कण्ठ्यानां वर्णानामग्निर्देवता वर्णाश्चाग्नेया उच्यन्ते ।

२. तालव्यानां सोमो देवता वर्णाश्च सौम्याः ।

३. मूर्धन्यानां वायुर्देवता वर्णाश्च वायव्याः ।

४. दन्त्यानां रुद्रो देवता वर्णाश्च रौद्राः ।

५. ओष्ठ्यानामश्विदेवता वर्णाश्चाश्विनाः ।

६. शेषाणां विश्वेदेवा देवता वर्णाश्च वैश्वदेवाः ।

७. इति यथाकात्यायनीयप्रातिशाख्यं देवता वर्णानां ज्ञेयाः।

८. इति वर्णानां प्रकृत्यनुसारेण देवतानिर्णयः ।

९. तत्र कण्ठे श्वासस्योष्णताप्रधानत्वात्कण्ठ्यानां वर्णानां देवताग्निरेव, तालुनि निरन्तरं लालास्रावनामक-सोमोत्पत्तेः तालव्यानां मार्दवगुणकत्वात् सोमो देवता, मूर्धन्यानामुच्चारणे बलवत्तरवायुसाहाय्यत्वाद् वायुर्देवता, दन्तानां विकरालकरत्वाद् भयोत्पादकत्वाच्च दन्त्यानां वर्णानां रुद्रो देवता, मकारादीनामौष्ठ्यानां भाषासौन्दर्यातिशये बीजत्वादश्विदेवता, शेषाणां शेषत्वादेव विश्वेदेवा देवता इति रहस्यम् ।

इति द्वादशोऽध्यायः

# अथाक्षरसमाम्नायविज्ञानीयनामा

## त्रयोदशोऽध्यायः

१. अथाक्षरसमाम्नायः पठ्यते ।

२. अ इ उ ऋ ऌ ए ऐ ओ औ अं अः
क ख ग घ ङ
च छ ज झ ञ
ट ठ ड ढ ण
त थ द ध न
प फ ब भ म
य र ल व श ष स ह इति चतुश्चत्वारिंशत्,

३. दीर्घप्लुतभेदाभ्याम् अष्टपञ्चाशदक्षराणि ।

४. यथा-यथा पौर्वापर्येण वर्णश्रुतिस्तथा तथा समाहृत्य वर्णा आम्नाता पठिता इत्यर्थः ।

५. तद्यथा स्वरेषु पूर्वं कण्ठेऽकार उपलब्धस्ततस्तालुनि इकार उपलब्धस्तत ओष्ठ उकार उपलब्ध इति मूल-स्वरक्रमोऽत्र सर्वथा वैज्ञानिकः ।

६. ततः कृत्रिमौ द्वौ ऋऌवर्णावपि क्रमशः पठितौ मूर्धन्यदन्त्यौ स्वरौ ।

७. ततः संयुक्तस्वरेषु पूर्वं कण्ठतालव्यौ द्वौ ए ऐ इति क्रमशो विवृततरविवृततमौ ।

८. ततः कण्ठौष्ठ्यौ द्वौ ओ औ इत्येतावपि क्रमशो विवृत-

तरविवृततमाविति संयुक्तस्वरक्रमोऽपि सर्वथा वैज्ञानिकः।

९. ततोऽनुस्वारविसर्गौ द्वावयोगवाहावपि सर्वत्र स्वरेभ्यः परावेवैतौ प्रयुज्येते तस्मात्स्वरानन्तरमेव पठितौ सतावपि व्यञ्जनरूपिणौ ।

१०. अनयोः क्रमवैज्ञानिकता तूचितस्थाने स्पष्टीकरिष्यते ।

११. अथ व्यञ्जनेष्वपि यथापूर्वंश्रुतिस्तथा गृहीतास्तद्यथा यथास्थानक्रमम्—

क ख ग घ ङ इति कण्ठ्याः

च छ ज झ ञ इति तालव्याः

ट ठ ड ढ ण इति मूर्धन्याः

त थ द ध न इति दन्त्याः

प फ ब भ म इति त्वौष्ठ्या इति स्पर्शाः ।

१२. ततोऽन्तःस्था य र ल व इति तालव्यमूर्धन्यदन्त्यौष्ठ्या यथास्थानक्रममेव ।

१३. ततः श ष स ह इति क्रमशस्तालव्यमूर्धन्यदन्त्यकण्ठ्याः ।

१४. ननु कण्ठ्यत्वाद् हकार आदावेवोष्मसु पठितव्य इति चेन्न वक्ष्यमाणरीत्यैषोऽपि क्रमोऽनुस्वारविसर्गक्रमवद्वैज्ञानिकः ।

१५. अस्तु तर्हि स्थानपौर्वापर्येण कु चु टु तु पु—आदीनां क्रमः, किन्तु कण्ठ्येषु ख एव ग एव घ एव ङ एव वा पूर्वं पाठ्यो न तु क इति । तथैवान्यवर्गेष्वपि च ट त प एवादौ न पठितव्या अपि तु द्वितीयतृतीयादिषु कोऽपि पठ्येतादौ का हानिः?

१६. तत्रोच्यते, मैवं वक्तव्यम् । न क्वचिदप्याचार्या अङ्गुलि-

निर्देश्यं दोषयुक्तं पादन्यासं कुर्वन्ति । सम्यग्विविच्य विविच्यैव सर्वत्र पादन्यासः कृतः शास्त्रेषु, तथैवात्रापि ज्ञेयम् ।

१७. ननु मया तु न कश्चिदपि विशेषोऽत्र दृष्टः ?

१८. दर्शने प्रयत्नः क्रियतामद्य । तद्यथा च वर्गाणां स्थान–पौर्वापर्येण क्रमस्तथैव च वर्ग्याक्षराणां क ख ग घ ङा-दीनां तु बाह्यप्रयत्नपौर्वापर्येण क्रमो विहितः । तद्यथा दृश्यतामत्र विवारश्वासाघोषास्तु स्वाभाविका बाह्य-प्रयत्नास्तस्माद्विवारश्वासाघोषवन्तो वर्णाः प्रथमद्विती-याः कख चछ टठ तथ पफाः प्रतिवर्गं पूर्वमेव पठितास्त-तोऽस्वाभाविकाः संवारनादघोषवन्तो वर्णास्तृतीयचतु-र्थप्रञ्चमाः गघङ जझञ डढण दधन बभमा अपि पठिता अन्ते ।

१९. एवं तर्हि कखयोरेव ख एव पूर्वं स्यात् गघङेषु घङ वा पूर्वं स्यान्न तु कगौ तथैवान्यावर्गेष्वपि स्यात् का हानिः?

२०. मैवं वक्तव्यम्, अत्रापि स्तस्तावदल्पप्राणमहाप्राणावपि प्रयत्नौ शेषौ द्वौ । तत्र त्वल्पप्राणप्रयत्नः स्वाभाविको महाप्राणप्रयत्नोऽस्वाभाविकस्तस्मात् स्वाभाविकाः पूर्वं पठ्यन्ते ततोऽस्वाभाविका इति । अत एव विवारश्वा-साघोषवत्सु तावदल्पप्राणप्रयत्नवन्तः क च ट त पा एव पूर्वं पठितास्ततः ख छ ठ थ फा विवारश्वासाघोष-महाप्राणप्रयत्नवन्तः पठिताः ।

२१. तथैव संवारनादघोषवत्स्वपि पूर्वं तावदल्पप्राणप्रयत्न-वन्तो ग ज ड द बा इति पठितास्ततो महाप्राणप्रयत्न-वन्तो घ झ ढ ध भा इति चतुर्थाः पठिताः ।

२२. एवं तर्हि ङ ञ ण न मा अपि पञ्चमास्त्वल्पप्राणप्रयत्नत्वाद् गज ड द बादीनामनन्तरमेव पठनीयास्तत एव घ झ ढ ध भा इति।

२३. तत्रोच्यते स्पर्शाख्याश्चैते वर्णाः सन्ति चाननुनासिका अनुनासिकाश्च। तत्रापि स्वाभाविकाननुनासिकानेव पूर्वमुक्त्वा ततोऽस्वाभाविकाननुनासिकान् स्पर्शवर्णान् पठन्त्याचार्या ङ ञ ण न म इति उचितमेतच्चैत्। तत्र चैतेऽनुनासिका ङ ञ ण न माः संवारनादाघोषाल्पप्राणप्रयत्नवन्त एव सन्तीति कृत्वा तदग्रेऽन्ते पठ्यन्ते। न संवारादिगणप्रयत्नवन्तो महाप्राणप्रयत्नवन्तो ह्यन्ये सन्तीति न पठिताः षष्ठाः केचनाऽनुनासिकाः। विवारश्वासाघोषवन्तस्तु सानुनासिका भवन्त्येव न।

२४. कँ खँ गँ घँ इत्यादयो यमास्तु सानुनासिकाः प्रातिशाख्येषु प्रसिद्धाः, किन्तु ते वन्ध्यापुत्रवदेव ज्ञेयाः सर्वथाऽभावात्।

२५. ननु यरलवेष्वन्तःस्थेषु कः क्रमः?

२६. तत्रोच्यते स्थानपौर्वापर्येणेति।

२७. ननु बाह्यप्रयत्नानुसारी कथन्न कृतः क्रमः? यथोक्तं पूर्वम् 'अथ व्यञ्जनेषु बाह्यप्रयत्नानुसारी क्रमः' इति।

२८. एवं तर्हि बाह्यप्रयत्नानुसार्येव क्रमः कृतः। किन्तु ते ऽसर्वेऽन्तःस्थाः संवारनादघोषवन्तोऽल्पप्राणवन्तश्च सन्तीति कृत्वा स्थानपौर्वापर्येणैव क्रम इति नात्रापि सम्भवः क्रमवैज्ञानिकताहानेः।

२९. अथोष्मसु कः क्रमो विहितः?

३०. किमर्थं प्रश्नः क्रियते?

३१. नन्वयं हकारः कण्ठ्यः सोऽन्ते पठ्यते ।

३२. मैवं द्विधा ह्यूष्मवर्णाः स्वाभाविका अस्वाभाविकाश्च । तत्र श ष सा विवारश्वासाघोषवन्तः स्वाभाविकाः महाप्राणवन्तः । अयं हकारस्तु महाप्राणप्रयत्नवानपि संवारनादघोषप्रयत्नवान् अस्वाभाविक इति कृत्वान्ते पठितः, श ष सा आदौ । श ष सेषु तु स्थानपौर्वापर्येणैव क्रमसम्भव इति कृत्वा तथा कृतः । तस्माच्शषसहानामपि क्रमः सर्वथा वैज्ञानिकः ।

३३. एवं तर्हि तावनुस्वारविसर्गौ व्यञ्जनादेशत्वाद् व्यञ्जनेष्वेवान्ते पठनीयौ तत्किन्न क्रियते ?

३४. मैवम्, एतदपि न वक्तव्यम् । अयोगवाहाविमौ सर्वत्र स्वरानन्तरमेव प्रयुज्येते तस्मात्स्वरानन्तरमेव पूर्वं पठितौ ।

३५. एवं तर्हि कण्ठ्यो विसर्गः पूर्वं ततोऽयं नासिक्योऽनुस्वारः स्यात् अः अं इति

३६. एतदपि न वक्तव्यम् । व्यञ्जनादेशत्वाद् व्यञ्जनेष्विवात्रापि स्वाभाविकास्वाभाविकत्वं परीक्ष्यैव क्रमो विहितः । स्वाभाविको ह्यनुस्वारोऽल्पप्राणवान् पूर्वमेव पठितस्ततो महाप्राणवानस्वाभाविको विसर्गः अं अः इति । तस्मादेव अं अः इति श ष स ह इति समुच्चारणे मुखसुखं जायतेऽनुभूयते च ।

३७. अन्तःस्थोष्मगणयोस्तु अल्पप्राणमहाप्राणप्रयत्नदृष्ट्या पौर्वापर्यं वक्तुं शक्यते । किन्तु नैतद् बहुयुक्तियुक्तम् तत्कारणं त्वग्रे द्रष्टव्यम् ।

३८. तदेतेन ऋग्वेदप्रातिशाख्यभूमिकाकाराचार्यविष्णु-

मित्रेण कृतः सर्वत्र स्थानपौर्वापर्येण क्रमो ऽवैज्ञानिक एव। तद्यथा—

अ ऋ इ लृ उ ए ओ ऐ औ हशषसाः अः ⌒क⌒ प अं इति।

३६. अत्र ऋवर्णो जिह्वामूलीय इति स्वीकृत्य कण्ठ्यत्वादकारानन्तरमेव ऋवर्णोऽभिहितः, एतदपि न युक्तम्।

४०. ननु सम्पूर्णाक्षरसमाम्नायस्य कः क्रमः?

४१. तत्रोच्यतेऽन्तःप्रयत्नानुसारीति। तद्यथा कादयो मावसानाः पञ्चवर्गीयाः पञ्चविंशतिवर्णाः स्पर्शाख्याः स्पृष्टान्तःप्रयत्नवन्तः व्यञ्जनेषु प्रथमं पठिताः। तत ईषत्स्पृष्टप्रयत्नवन्तोऽन्तःस्था यरलवास्तत ईषद्विवृतप्रयत्नवन्तः श ष स हा इति

४२. एवं तर्हि विवृतप्रयत्नवन्तः स्वरास्तु सर्वान्ते पठनीया इति चेन्न, स्वाभाविका हि विवृतप्रयत्नवन्तः इति कृत्वा स्वराः पूर्वमेव पठिताः। तदेवोचितमिति। नैतैर्विना व्यञ्जनोच्चारणमपि शक्यम्।

४३. स एषोऽक्षरसमाम्नायक्रमो महर्षीणां सूक्ष्मबुद्धित्वप्रमाणम्।

४४. न चैतादृशी वैज्ञानिकी वर्णमातृका लोके क्वापि देशेऽन्यभाषायाः परिदृश्यते।

इति त्रयोदशोऽध्यायः

# अथ वर्णलिप्युच्चारणप्रत्याख्यानक्रान्ति-विज्ञानीयनामा

## चतुर्दशोऽध्यायः

१. तत्र पूर्वं कं् खं् गं् घं् इत्यादयश्चत्वारो विंशतिर्वा यमाख्या वर्णाः प्रत्याख्यायन्ते, अभावात् । यथा वन्ध्यापुत्रः शशशृङ्गं खपुष्पमिति तथैव यमा अपि ज्ञेयाः । तस्मात्ते न लेख्याः ।

२. ननु प्रातिशाख्येषु तु प्रसिद्धास्तद्यथा—"स्पर्शा यमाननुनासिकाः स्वान्परेषु स्पर्शेष्वनुनासिकेषु" इत्युक्तमृग्वेदप्रातिशाख्ये । तथा च "अन्तःपदेऽपञ्चमः पञ्चमेषु विच्छेदम्" विच्छेदं नाम यममापद्यते इत्युक्तं शुक्लयजुःप्रातिशाख्ये । तद्यथा—पलिक्क्नीः—चख्ख्नतुः-परिज्ज्मन्—गृभ्भ्णामि-आत्त्मा-अमथ्थ्नादन्त्यमिति । तथा चाथर्वप्रातिशाख्येऽपि "समानपदेऽनुत्तमात्स्पर्शादुत्तमे यमैर्यथासंख्यम्" इति चोक्तम् ।

३. ननु स्वान्यमानापद्यन्त इति चेत्कथं आत्क्मदा पत्क्नीभिरित्यत्र तकारस्य ककारो यमः प्राप्तः ?

४. तत्र तु येषां मते चत्वार एव यमाः कं् खं् गं् घं् इति तत्र स्वानित्यस्य प्रथमस्य प्रथमो द्वितीयस्य द्वितीयस्तृतीयस्य तृतीयश्चतुर्थस्य चतुर्थ एव यमः प्राप्नोति । येषां मते

खलु विंशतिर्यमा न तत्रायं दोषस्तद्यथा आत्मा-गृभ्भ्णा-मीत्यादयः सिद्धाः ।

५. एवं तर्हि चत्वारो वा विंशतिर्वा, सर्वे वन्ध्यापुत्रदेव ज्ञेयाः । किं कारणम् ? कात्यायनीयशुक्लयजुःप्रातिशाख्ये चोक्तं "यमानुस्वारनासिक्यानां नासिके" (अध्याय १ सूत्र ७४) "नासिकामूलेन यमाः" (अध्याय १ सूत्र ८२) इति । तेन ज्ञायतेऽनुनासिका एव भवन्ति सर्वे यमाः, तदेतत्सर्वसम्मतम् । तत्राहमुद्घोषयामि यदपञ्चमस्पर्शास्तु न कदाप्यनुनासिका भवन्ति, सर्वथानुभवविरुद्धत्वात् । अकारान्ताः कादयः स्पर्शा अपञ्चमा तद्यथा क ख ग च प इति, अकारादयो वा कृत्वा तद्यथा अक् अग् अच् अबित्युच्चारिता न कथमप्यनुनासिकाः कर्तुं शक्याः, नासिकायोगासम्भवत्वात् । न वा नासिकामूलयोगसम्भवः । निष्पक्षैरनुभूयतां भवद्भिः तत्रासत्स्वपञ्चमस्पर्शवर्णेष्वनुनासिकेषु कथं तदापत्तिः सम्भवा । कथं हि वन्ध्यापुत्रस्य पाणिग्रहणं कथं वा तस्याः पौत्रा इति । अननुनासिकापत्तौ तु न द्वित्वाद् विशेषो न वा तदिष्यत एव, अनुनासिक एवेष्येते पञ्चमयोगे । न चानुनासिका अपञ्चमा स्पर्शाः सन्तीति कृत्वा सर्वापि यमप्रक्रिया वृथैव कल्पितेति । न च वैदिककालिकाचार्यास्तथोच्चारयितुं समर्था आसन्निति, न हि तेषामस्माकञ्च स्थानेषु भेदः ।

६. एवं तर्हि यमापत्तिं दोषमेव मत्वा नोच्चार्यन्तां केवलं लेख्यन्तां ज्ञानार्थम्, यदीमे दोषा नोच्चार्या इति तु वक्तुं शक्यते । अथवा मैवम्, सति वन्ध्यात्वे कथं पुत्रोत्पत्ति-

रिति कृत्वा यमोच्चारणासम्भवे कुतो यमः कुतो दोष इति, यमाः प्रत्याख्याता एव विज्ञेयाः। तस्मात्सर्वाऽपि यमप्रक्रिया प्रातिशाख्यानुसारिणी वृथा विज्ञेया। तद्यथा ऋकारो जिह्वामूलीयः प्रमाद एव तथैवेमेऽपि प्रमाद-कृता एव ज्ञेयाः। तस्मानैवात्र विवेकिविद्वद्भिर्मुह्यताम्।

७. तथा च दयानन्दोऽप्यत्र न युक्तं वदति। स तु ँ ह्रस्वं ँ दीर्घं ँ अनुनासिक ळ इति चत्वारो यमा इति तत्र ँ त्वनुस्वार एव। ळकारस्त्वननुनासिक एव। अनुनासिकौ द्वावपि न वर्णावपि तु स्वरधर्मौ। अननुना-सिकत्वान्न ळकारे यमत्वं यतो हि यमाःअनुनासिका एवेष्यन्ते। तस्मादिमेऽपि न यमाः। अयं खलु दयानन्दः स्वतर्केणैवापास्तः पूर्णं पठित एवेत्यनेन तर्केण। तत्र येन तर्केण खल्वप्रथमवर्गीयाऽकण्ठ्या अप्यपञ्चम-स्पर्शाः स्वान् यमान्नापद्यन्ते इति पक्षोऽपि प्रत्याख्यातः। तथा च पूर्वं पठिता एवेति दयानन्दस्य तर्केण सर्ववर्गीयापञ्चमस्पर्शा यमानापद्यन्ते इति पक्षोऽपि प्रत्याख्यातः। इत्येवं यमाः सर्वथा प्रत्याख्याता एव। यदि च पुनरपि कश्चिद् हठात्स्वीकरोत्येव न मे क्षतिः, किन्तु वर्णसमाम्नाये न परिगणनीयाः। यथा—चान्तःस्था अनुनासिकाननुनासिकत्वाभ्यां द्विधा सन्तोऽपि सकृदेवाक्षरसमाम्नाये पठिताः तथैव यमापि नोपदेश्याः कादिषु सकृदुपदिष्टा हि ते।

८. ᳵक ᳶप इत्येतावपि प्रत्याख्यायेते। अयमत्र विसर्गः कण्ठ्यः ककारोऽपि कण्ठ्यः। तत्र कण्ठ्ये वर्णे कण्ठ्यो विसर्ग एव भविष्यति। तस्मात् ᳵक इति न कोऽपि

जिह्वामूलीयो वर्णो भवति विसर्ग एव भवतीति साधुरेवात्र शाकल्यः। तन्मतमाह शुक्लयजुःप्रातिशाख्यकारः– "प्रकृत्याः कखयोः पफयोश्चेति"।

९. ननु जिह्वामूलीयः कोऽपि वर्णो भवति न वा ?

१०. ननु भवानेवोत्तरयतु किं जिह्वामध्यीया वा जिह्वोपाग्रीया वा वर्णा भवन्ति ? न वा भवन्ति ?

११. न भवन्ति।

१२. एवं तर्हि जिह्वामूलीयोऽपि न भवति।

१३. किं कारणम् ? न हि जिह्वामूलं स्थानम्, अपि तु करणमात्रमेव। न तेन वर्णा विशेष्याः, स्थानैरेव विशेष्याः। न च जिह्वामूलं स्थानं न च जिह्वामूलीयो वर्णः। कण्ठ एव स्थानं कण्ठ्य एव विसर्गः कण्ठ्य एव ककारस्तस्मात्कण्ठ्ये कण्ठ्य एव, नान्यः प्राप्नोति। न च वर्णो न च प्राप्तिः। एतेनाथर्वप्रातिशाख्याभिमतं हनुमूलस्य करणत्वमपि प्रत्याख्यातं जिह्वामूलहनुमूलयोः परस्परस्पर्शाभावाच्च अभिन्नदेशत्वात्।

१४. अथोपध्मानीयो भवति न वा ?

१५. न भवति। सोऽपि जिह्वामूलीयवदेव ज्ञेयः। न चोपध्मानाम किञ्चित्स्थानं न वा तद्वर्णः। यथा च तालव्ये शत्वं मूर्धन्ये षत्वं दन्त्ये सत्वं तथैवौष्ठ्ये पकारे वा फकारे वा पकार एव प्राप्नोति औष्ठ्योष्मणो वर्णस्याभावादिति। न स वर्णो न वा प्राप्तिः। प्रकृत्या विसर्ग एवेति शाकल्यः साधुः।

१६. ळळ्हौ अपि तथा ज्ञेयौ। डढयोः स्थाने ळळ्हौ भवत आदेशाविति च मतं चिन्त्यमेव, तयोरसत्त्वात्।

१७. अथ किं लिपौ प्रत्याख्येयम् ?

१८. खकारस्य लिपिरयुक्तेति ।

१९. किं कारणम् ?

२०. तत्र खे शब्दे न ज्ञायते हे सूर्य इत्यर्थः खे आकाशे वार्थः । तत्र कवर्गीये खे शब्दे रेफस्य लिपेः संश्लेषत्वाद् भ्रमो जायते । तस्मात्खकारस्य लिपिरयुक्ता वेदितव्या ।

२१. इकारस्यपि मात्रालिपिरयुक्तैव । तद्यथा अस्त्विति लिखिते इकारमात्रा त्वकारानन्तरमेव दृश्यते । वस्तुतस्तु इकारो वकारानन्तरमेव लेख्यो येन लेखने कदापि त्रुटिर्न भवतु । दृश्यते प्रायो ह्रस्वेकारचिह्नलेखने विद्वांसोऽपि विस्मृतेस्त्रुटिं कुर्वन्ति शीघ्रतायां पश्चाच्च घिचपिचायते स्थानाभावात् । तस्माद्ध्रस्वेकारचिह्नं तथाविधं विधेयं यथा स्वस्थाने कृते दीर्घेकारेण सह भ्रमो न स्यात् । तद्यथा उकारे भ्रमो न भवति प्रभुः प्रभू इति ।

२२. ज्ञक्षौ च प्रत्याख्येयेते । जञोर्योगे ज्ञः क्षयोर्योगे क्ष इति लिख्येते । किन्तु ज्ञोच्चारणस्थाने ग्य ग्न्य द्न्यादयो बहव उच्चारणदोषाः श्रूयन्ते तत्र ज्ञ इत्येवोच्चारणं कर्तव्यं नान्यत् । तथैव क्षवर्णस्योच्चारणमपि छकारः क्रियते । तदेतदपि न युक्तं तस्मात्क्ष्योगे या क्ष-लिपिस्तस्याश्छकारोच्चारणमपि न कर्त्तव्यम् । समीचीनं त्वेतदेव यत्स्पष्टं ज्ञ क्ष एव लेख्यौ न ज्ञक्षौ ।

२३. षस्योच्चारणमपि ख इति क्रियते मूर्धन्यस्य कण्ठ्योच्चारणमिति । वैदिकैरपि शुक्लयजुर्माध्यन्दिनीयैष्टवर्गयोगाभावेऽटवर्गयोगे च खकारोच्चारणं क्रियते, तदेतदपि त्वयुक्तमेव प्रमत्तगीतमिव ।

२४. यकारस्यापि तैरेव वैदिकैर्लौकिकैरपि बहुभिर्जकारोच्चारणं क्रियते। तद्यथा यशोदा जशोदेति-अर्य्यमा अर्ज्जमेति पठ्यते। तदेतत्सर्वमेव प्रमादकृतम् अयुक्तञ्च।

२५. ॐ इत्यस्यापि ग्वं इत्याद्युच्चारणमपि त्वयुक्तमेव अनुस्वारत्वात्।

इति चतुर्दशोऽध्यायः

---

# अथ ऋलृवर्णत्वविज्ञानीयनामा

## पञ्चदशोऽध्यायः

१. ननु ऋकारलृकारयोः प्रक्रियाऽपि न मेऽभिमता, तयोर्वर्णत्वाभावात्। नापि तौ स्वरौ न च व्यञ्जने, किन्तु व्यञ्जनस्वरयोः समुदायौ र+इ तथा ल+र+इ वर्णानां स्पष्टं श्रवणात्। तथा च कण्ठतालुमूर्धदन्तौष्ठेषु प्रत्येकं स्वरस्थानमिति पूर्वाचार्याणां मतमसाम्प्रतम्, मूर्धदन्तस्थानयोः स्वरोत्पादकत्वाभावात्। विवरनिवृत्यभावात्। न विवरेण विना स्वरोत्पत्तिरिति। तस्मात् ऋलृवर्णावपि प्रत्याख्येयौ। अक्षरसमाम्नाये स्वरेषु परिगणितौ ऋलृवर्णौ न पठितव्यौ। किं कारणम्? न तौ स्वरौ न वा व्यञ्जने। कौ तर्हि? व्यञ्जनस्वरसमु-

दायौ । ते वर्णास्तु समाम्नाये पृथक् पठिता एव । महाभाष्येऽपि पतञ्जलिना तत्राज्भक्तिः स्वीकृतैव । अत एवार्यावर्ते उत्तराखण्डीया मध्यदेशीयाश्च इकाराज्भक्त्या रि लृ इत्युच्चारयन्ति दाक्षिणात्यास्तु उकाराज्भक्त्या रु लरु इत्युच्चारयन्ति तेन ज्ञायतेऽस्त्यत्राज्भक्तिः । साप्यनिश्चिता । रेफलकारौ तु निश्चितावेव । तावपि रेफलकारावादावेव अनिश्चितत्वादेव कश्चिदिकारान्तं कश्चिदुकारान्तमुच्चारयति तस्मात्कृत्रिमावेतौ व्यञ्जनादी न स्वरौ ।

२. मैवं वक्तव्यं यणादिकार्यदर्शनाद् गुणवृद्धिविधानाच्च सिद्धौ स्वरावेव । तद्यथा हर्यृणं कृष्णर्धिः आर्त्विजीनाः स्मार्तः तवल्कार इत्यादयः । न चेत्स्वरौ कथं प्रयोगाः सिद्धा भविष्यन्ति । तस्मात्स्वरावेवेति ज्ञेयम् ।

३. ननु अस्थाने पादन्यास एवात्राचार्याणां यण्गुणवृद्धिविधनमिति । हर्यृणमित्यत्र यण् न भवति । कृते यकारे ऋकारोच्चारण भवत्येव न असम्भवत्वात् । न तथा कर्तुं शक्यतेऽनुभूयतां तावत् । अत एव न कुत्रापि लोके वेदे वा शास्त्रेषु यकारस्य परेण रेफेण योगो दृश्यते, उच्चारणासम्भवात् । ऋकारेऽपि रकार एवादौ । तत्र व्यञ्जनादित्वात् स्वरत्वाभावाद्यण् एत्र न प्राप्नोति । कृतेऽपि यकारे तदुच्चारणमसम्भवमिति यण्विधिरयुक्त एव ।

४. यर्त्तहि गुणवृद्धिविधानम् ?

५. तदपि न कर्त्तव्यम् ।

६. कथं तर्हि स्मार्तादयः शब्दाः सिद्ध्येरन् ?

७. अत्राप्यादेशौ वक्तव्यौ अर् आर् इति, न तु स्वरं मत्वा गुणवृद्धिविधानं युक्तमिति । यदा तु स्वयमेवा-

चार्याः पठन्ति सूत्रम्—सरेफ ऋवर्णं इति। तथा चर्क्-प्रातिशाख्येऽपि—ऋलृवर्णौ रेफलकारसंश्लिष्टावित्युक्तं स्पष्टम् । तत्र स्वरत्वाभावे कथं यण् गुणवृद्धयो भविष्यन्ति । तथा च प्रातिशाख्येऽप्युक्तम् "पदाद्यन्तयोर्न लृकारः स्वरेषु" तत्र यदि स्वरः कथन्न पदाद्यन्तयोः स्वरत्वं भासते। आद्यन्तयोश्चेन्न स्वरो, मध्येऽपि नोचितं वक्तुम् । तथाथर्वप्रातिशाख्येऽपि "संस्पृष्टरेफमृवर्णं सलकारम्लृवर्णमित्युक्तम् तस्मात्स्पष्टमेवात्र यदृलृवर्णयोः स्तो रेफलकारौ, तौ चादावेव। तथा च ऋलृवर्णौ रेफलकारसंश्लिष्टावश्रुतिधरावेकवर्णावित्यत्र ऋक्प्रातिशाख्यवचनस्यैकवर्णाविति ज्ञापकम् । यत्संश्लिष्टावत्र रेफलकारौ, तौ चादावेव। तथा च निर्ऋतिरित्यत्र ऋकारे व्यञ्जनादित्वं नास्ति तर्हि कथं रेफस्योर्ध्वगमनं कथं वा रेफे इकारोकारवद्योगो न भवति तद्यथा र रि रु रृ इति तत्रोर्ध्वगमनाज्ज्ञायते व्यञ्जनादी न स्वराविति न वा वर्णौ ।

८. तर्त्तर्हि प्रत्याख्येयौ ?

९. नेति ।

१०. ननु चोक्तं न स्वराविति ?

११. मैवम्, वेदा एवास्माकं परमं प्रमाणानि। तत्र दृश्यते वेदेषु ऋकारस्योदात्तानुदात्तस्वरितत्वविधानमिति । तद्यथा "उपयामगृहीतोऽसि" अनुदात्तमृकारं पठति। तथा "यज्ञे कृण्वन्ति विदथेषु धीराः" इत्यत्र ऋकारः स्वरित इति ।

१२. नन्वत्रापि योऽज्भक्तिरन्तेऽस्ति ऋकारे तस्यैवोदात्तादयो भवन्ति न तु रेफस्य, अर्थात् आदौ न भवतीति ।

१३. एवं तर्हि स्वर एव, यदग्रे "यस्मिन्नृचः साम यजूंषि यस्मिन्नित्यत्र स्वरे नुडागमं करोति। तस्मात्स्वरावेव वर्णौं च। अत एवाचार्या अपि सरेफ ऋवर्ण इत्यत्र ऋकारे परे विसर्गाभावं पठन्ति। अन्यथा सरेफो ऋवर्णं इति पठेयुः। तथा च तत्रैव प्रातिशाख्येऽप्युक्तमग्रे ऋ लृ वर्णौं रेफलकारसंश्लिष्टावश्रुतिधरावेकवर्णाविति। अर्थाद् रेफलकारसंश्लिष्टौ यौ श्रूयेते तावश्रुतिधरौ च एकवर्णौं चेति। तस्मान्न प्रत्याख्येयौ। अत एवाक्षर-समाम्नाये पठितौ कृत्रिमौ च।

१४. ननु यस्य खलु वेदानामपि न प्रामाण्यम्?

१५. एवं तर्ह्यावश्यकतया शब्दानां व्याकृतये स्वरत्वं स्वीकार्यं-मेव। चत्वारोऽन्तःस्था य र ल वा इति। यवयोरिकारो-कारौ स्थानिनौ तत्र रेफलकाराभ्यां स्थानिद्वयस्या-वश्यकत्वादृलृवर्णौं स्वरौ कृत्रिमौ ज्ञेयौ। तत्र यण्-गुणवृद्धिविधानेन लघूपायेन सर्वं सिद्ध भवतीति। यतो हि उपायाः शिक्षमाणानां बालानामुपलालनाः, तथा च 'असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते' इति ज्ञात्वा न प्रत्याख्येयौ। अथवान्यथैव हि व्याकर्तव्या वा शब्दाः। प्रकृतिप्रत्ययाश्चाप्यादेशागमादयोऽप्य-न्यथा पठितव्याः। तद्यथा क्रि स्त्रि भ्रीत्यादयो धातवो-ऽरारादेशादयः पठितव्याः तथा च परिगणनं कृत्वा तदिकारस्य यण्गुणवृद्धिप्रतिषेधोऽपि वक्तव्यः।

१६. ननु किमृकारस्य स्थानमिति? मूर्धेति। ननु चोक्तं कवर्गं ऋवर्णश्च जिह्वामूलीय इति तथा च प्रतिशा-ख्येऽपि ऋकौ जिह्वामूले इति चोक्तम्।

१७. मैवं–प्रमाद एवात्रापि । रेफः संश्लिष्टोऽत्र स च मूर्धन्योऽत एवकारोऽपि मूर्धन्य एव । अन्यथा स्थानान्तर्येण कथं रेफो यणादेशो भविष्यतीति । जिह्वामूलस्य स्थानत्वं तु खण्डितमेव । ननु लृवर्णो दीर्घो मन्यते ? मन्यते तु, का हानिः ? न कापि हानिः, किन्त्वपाणिनीयत्वापत्तिर्भवति । तस्य दीर्घाभावात् । मैवं वक्तव्यम् । प्लुतश्चेदुच्चारयितुं शक्यस्तर्हि दीर्घोच्चारणशक्यत्वे को बाधते ? दीर्घत्वं विना प्लुतत्वं तु सम्भवमेव न । त्रिमात्रिकश्चेद् द्विमात्रिकोऽपि सिद्धः । न चात्र दीर्घत्वाभावः सन्ध्यक्षराणां ह्रस्वत्वाभाव इव वक्तव्यः । तेषु त्वकारेकारयोरकारोकारयोर्द्वयोर्द्वयोः संयोगात् ह्रस्वत्वाभावः । एवं तर्हि रेफलकारसंयोगत्वात् ह्रस्वत्वाभाव एव वक्तव्यः । मैवं, यदर्थं कृत्रिमावेतौ विनिर्मितौ न तत्ककार्यं भविष्यति । एवं तर्हि त्रिसंख्याङ्केन प्लुतो निर्दिश्यते लृ ३ इति, न च दीर्घः क्वचिदुपलभ्यते । मैवं, संख्यया निर्देशस्तु काल्पनिकः संकेतमात्रमेव, वर्णस्य वर्णत्वं तूच्चारण एव । तत्र प्लुतश्चेदुच्चार्यते दीर्घोऽपि शक्यः । ननु ऋ-लृ-वर्णयोर्मिथः सावर्ण्यं वाच्यमिति कृत्वा दीर्घविधौ तु ऋकार एव लृवर्णस्थाने विधीयते । विधीयेत त्वद्यत्वे, किन्तु न विधेयम् । लृकार एव विधेयो दीर्घः । नन्वपाणिनीयत्वं भवति ? भवतु नाम । नहि पाणिनिरापिशलिर्वा सर्वस्य संस्कृतवाङ्मयस्यैकः कर्णधारः । तथा च वर्णा नित्या अक्षरत्वात् । सिद्धान्ता अपि नित्याः । तत्र सिद्धे प्लुते नित्ये, दीर्घोऽपि सिद्धो नित्यश्च लृवर्णः, तस्मात् पाणिन्यादिमतमसाम्प्रतम् ।

इति पञ्चदशोऽध्यायः

# अथोच्चारणदोषविज्ञानीयनामा

## षडशोऽध्यायः

१. इदानीं वर्णोच्चारणदोषा उच्यन्ते ।

२. ननु किमयं वर्णोच्चारणदोष इति ? किं वर्णानामुच्चारणे दोषो जायते यथा च गवां वधे दोष इति ।

३. मैवं, नहि वर्णानामुच्चारणेन दोषो जायतेऽपि तु पुण्यफलप्रदमेवोच्चारणं भवति येन चार्थावगतिर्भवति, तथा च लोकव्यवहारसिद्धिरपि । कीदृगुच्चारणेन ? शुद्धेन । अथ चेदशुद्धोच्चारणं क्रियेत ? अनर्थावगति-रतदर्थावगतिर्विरुद्धार्थावगतिश्च भवति तथा च महान् ह्यनर्थः संजायते । तद्यथा—

दुष्टः शब्दः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥

तस्माच्छब्द एव वक्तव्यो नापशब्द इति । तथैव वर्णो-च्चारणविषयेऽपि ज्ञेयम् । शुद्धवर्णोच्चारणं कर्तव्यं न त्वशुद्धवर्णोच्चारणं वा दुष्टवर्णोच्चारणमिति । तत्र दुष्टवर्णोच्चारणमेव वर्णोच्चारणदोष इति ज्ञेयम् । न तु वर्णानामुच्चारणेन दोषप्रसङ्ग इति लाभः ।

  

४. अथ के-के वर्णानामुच्चारणे दोषा भवन्ति ?

५. तत्रोच्यते क्रमशस्तद्यथा–

१. संवृतत्वम्–एकारादीनां संध्यक्षराणां विवृततराणां ह्रस्वोच्चारणं संवृतत्वदोषः। तत्र सात्यमुग्रिराणायनीयानां मते तु विवृततमानामेव ह्रस्वोच्चारणं संवृतत्वदोषः। एतदयुक्तमेव। विवृततमानां कथमपि तु ह्रस्वोच्चारणं सम्भवमेव न। विवृततराणामेवैकारादीनां ह्रस्वोच्चारणं सम्भवं तदेव दोष इति तस्मात्ते न साधवोऽत्र। दोष एव सम्पद्यते विकृतित्वाद्, विकृतभाषासु दृश्यते श्रूयते च ह्रस्वत्वम्। किन्त्वस्ति तु दोष एवेति। व्यञ्जनमर्धमात्रा, तदर्धमणु, परमाण्वर्धाणुमात्रा इति तु वाजसनेयिमतानुसारेणाणुपरमाणुमात्रास्वीकारेऽकारेकारयोरर्धद्वयसंयोगादेकारोऽपि ह्रस्व इति वक्तुं शक्यते।

२. ध्मातत्वम्–श्वासभूयिष्ठतया ह्रस्वोऽपि दीर्घ इव श्रूयते। अयमेव विलम्बितत्वदोषः।

३. अर्धकत्वम्–दीर्घोऽपि ह्रस्व इव श्रूयते।

४. एणीकृतत्वम्–ओकारौकारयोरविशिष्टतयोच्चारणं येन न भेदः प्रतीयेत किमयमोकारो वौकार इति।

५. अम्बूकृतत्वम्–अन्तर्मुख इव व्यक्तोऽप्यव्यक्त इव।

६. ग्रस्तत्वम्–कण्ठ एव निगृहीतोऽव्यक्त इव श्रूयते। भक्षित इवेत्यर्थो नतूद्गीर्ण इव।

७. निरस्तत्वम्–निष्ठुर इवेति।

८. प्रगीतत्वम्—अस्थानेऽपि सामवदुच्चारितः ।

९. उपगीतत्वम्—समीपस्थवर्णान्तरेणानुरक्तत्वम् ।

१०. विकम्पितत्वम्—कम्पायमान इव ।

११. निर्हतत्वम्—स्निग्धोऽप्यनुदात्तो रुक्ष इव ।

१२. संदष्टत्वम्—वृथैव वर्धित इवेति । संदंशेन गृहीत्वेव ।

१३. अवलम्बितत्वम्—अन्यवर्णावलम्बितो वर्णान्तरेणासम्भिन्न इवेति ।

१४. रोमशत्वम्—गम्भीर इवेति ।

१५. द्रुतत्वम्—उच्चारणयोग्यकालात् प्रागेवोच्चारणम् । इति स्वरदोषाः ।

१६. क़लत्वम्—स्थानान्तरनिष्पन्नः काकलिकत्वेनलोके प्रसिद्धः ककारो यदा तु स्वस्थानात्किञ्चिदग्रत एवोच्चार्यते क़ इति, यश्चारबीभाषायां क़ाफ़ इत्युच्यते क़लक़ला शब्द इति । स एवायमत्र काकलिकत्वेन दोष एवेति । तस्मान्नायं वर्णसमाम्नाये गृहीतः । तथैव ग़ ख़ ज़ फ़ा इति अपि ज्ञेयाः । न चर्षयोऽत्रानभिज्ञा आसन्निति कृत्वा न पठिताः ।

१७. विकीर्णत्वम्—रकारोच्चारणे ऽजव्यवहितत्वेऽप्यनन्तरकारोच्चारणम्, एकोऽप्यनेकनिर्भासीति । तद्यथा अ र् र् र् र् इति यावच्छ्वासस्तिष्ठति तावदेवोच्चारिता भवन्ति । नायं दोषः कस्मिन्नपि वर्णे दृश्यते, रेफ एव केवलम् । स दोषोऽरबीशिक्षायां सिफ़ततक़कार इत्युच्यते । तेऽपि हेय इति ब्रुवन्ति अर्थात् त्याज्यं तथोच्चारणं दोषत्वात् ।

१८. सन्त्येभ्योऽन्येऽपि दोषा अशक्तिप्रमादकृताः । तत्रैते प्रधाना इति ज्ञेयम् ।

१९. व्याघ्री यथा हरेत्पुत्रान् दंष्ट्राभ्यां न च पीडयेत् ।
भीता पतनभेदाभ्यां तद्वद्वर्णान् प्रयोजयेत् ॥

२०. माधुर्यमक्षरव्यक्तिः पदच्छेदस्तु सुस्वरः ।
धैर्यं लयसमर्थञ्च षडेते पाठका गुणाः ॥

२१. गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥

इति षोडशोऽध्यायः

# अथ चतुर्दशप्रत्याहारसूत्रनिर्वृत्ति-विज्ञानीयनामा

## सप्तदशोऽध्यायः

१. नन्वमपरोऽव्यक्षरसमाम्नायः पाणिनिना पठितः। अ इ उ ण् ऋ लृ गित्यादिषु सूत्रेषु तत्र को विशेषः ?

२. अ इ उ ण् ऋ लृगादीनि चतुर्दश सूत्राणि तु प्रत्याहार-सूत्राणि पाणिनिकृतान्येव चेति । तत्र शब्दानुशासने शब्दानां लघूपायेन व्याकृतये सम्यग् विविच्य यथावश्यकं वर्णाश्चतुर्दशसूत्रेषु पठिता अच्-हलादि-प्रत्याहारनिर्वृ-त्त्यर्थम् ।

३. एवं तर्हि कथं कृत्वेतस्ततो वर्णाः समाम्नाता न यथोक्त-क्रमेण ?

४. मैवम् । अत्रापि क्रमः । स च वैज्ञानिकतर एवान्यस्मात् । अस्त्विदानीं प्रत्याहारसूत्रनिर्वृत्तिविधिरुच्यते । यथा हि सूक्ष्मबुद्धिनाचार्येण विचार्य प्रणीतानि । तद्यथा वर्ण्यतेऽग्रे ।

५. तत्र पूर्वं खलु प्रथमसंस्कृतगुरवेऽपूर्वसौम्यप्रकृतये परम-मृदुभाषिणे साक्षात्तथागतमूर्तये बालार्कजनपदब्राह्मणी-पुरः-निवासिने बालार्कपुष्करिणी-कमलदिवाकराय स्वप्रभामण्डितबालार्कविद्वत्सभामण्डपाय अन्तेवासिस-

हस्तसम्पूजितपादपङ्कजाय प्रातःस्मरणीयाय ऋषिरामाय शास्त्रिणे पुनर्मङ्गलाय नमो नमो यस्मात्खलु वर्णसमाम्नायोऽयं पाणिनीयोऽधीतः सर्वप्रथमं बालार्कसंस्कृतविद्यालये।

६. अइउण्—तत्र अ इ उ इति मूलस्वरास्त्रयो यथापौर्वापर्यं तथा पठिताः।

७. ऋलृक्—ततः कृत्रिमावपि द्वौ ऋ लृ इत्येतावपि स्थानपौर्वापर्येण पठितौ।

८. एओङ्—ततः क्रमशो विवृततरौ द्वौ कण्ठ्यतालव्यकण्ठ्यौष्ठ्यावपि पठितौ।

९. ऐऔच्—ततो विवृततमावपि द्वौ। इति चत्वारि सौवरसूत्राणि। तत्र गुणविध्यर्थं विवृततरौ वृद्धिविध्यर्थं विवृतमौ पृथक्-पृथक् पठिताविति तद्रहस्यम्।

१०. तत्र णकारद्वोनामन्त्य क्षराणां प्रत्याहारेऽग्रहणम्।

११. हयवरट्—लण्—यण्विधौ क्रमश इउऋलृ वर्णानां स्थाने क्रमशो यवरलादेशा भवन्तीति कृत्वा क्रमशो यवरल इति पठिताः। ततः पठत्याचार्य इको यणचीति सूत्रं लाघवार्थं स्वरानन्तरमेव। किन्तु अट्प्रत्याहारे लकारस्य ग्रहणं न स्यादित्येतर्थमेव लणिति सूत्रं पृथक् कृतम्। येनाट्कुप्वाङ्नुम्व्यवायेऽपीति सूत्रेण लकारे व्यवहिते णत्वं न स्यादिति। तेन प्रकल्पनमित्यत्र णत्वं न भवति।

१२. ञमङणनम्-रेफवर्जिताः सर्वे यणः स्वराश्च भवन्त्यनुनासिका अपि। अत एवानुनासिकप्रसङ्गे ञमङणनमिति

पञ्चमाः सानुनासिका वर्गवर्णाः पठिताः । किं कारणं ? पश्यत्यचार्यो व्यञ्जनेभ्यः पराश्चेत् यवरल-ञमङणनास्तेषां क्रमशः समानाक्षरे परे लोपो भवति । तस्माद्यवरलानन्तरमेव ञ म ङ ण नाः पठिताः । येन हलो यमां यमि लोप इत्येकेनैव सूत्रेण सर्वत्र लोपः स्यादिति । अस्तु, किन्तु वैज्ञानिकं क्रमं यथास्थानपौर्वापर्यं ङ ञ ण न मानां परित्यज्यावैज्ञानिकपौर्वापर्यं क्रमं कृतं तदयुक्तम् इति चेन्न, पश्चत्क्षाचार्यः सूक्ष्मदृष्टिर्व्यापकदृष्टिश्च ङमो ह्रस्वादचि ङमुण्नित्यमिति सूत्रं पठिष्यामि । तत्र ञकारमका रयोरपि ञुट्मुडागमौ भविष्यतः न च ताविष्टौ । ङणनानामेवागमा इष्टास्तद्यथा प्रत्यङ्ङात्मा सुगण्णीशः सन्नच्युत इति तस्माद् ङ ण नाः पृथक् कर्तुमन्ते पठिताः । तत्र वैज्ञानिकः क्रमो ञमयोस्तालव्यौष्ठ्ययोः । ङणनानाञ्च कण्ठ्यमूर्धन्यदन्त्यानामपि तथैव । तेन हलो यमां यमि लोपो, ङमो ह्रस्वादचि ङमुण्नित्यमित्युभयमपि सिद्धम् । न किञ्चित्किञ्चिद् बाधते न वा कस्यापि क्वचिदतिव्याप्तिरिति । ननु चोक्तम् ङ ण नाः पृथक् कर्तुमन्ते पठिता इति तत्रादावपि पठनेन पृथक् कर्तुं शक्यास्तद्यथा ङणनञममिति एवं तर्हीत्थमपि ङम्प्रत्याहारे ञमयोर्ग्रहणं भविष्यत्येव तथा च ञुट्मुडागमौ तु प्राप्तावेव भविष्यतः । मैवं, न प्राप्तौ भविष्यतः । कथं कृत्वा न प्राप्तौ भविष्यतः? ङमो ह्रस्वादचि ङमुण्नित्यमित्यस्य स्थाने ङस्य ह्रस्वादचि ङण्नित्यमिति पठिष्यामि । ननु ङस्य कोऽर्थं ?

अथ रस्य कोर्थः ? रलाविति। एवं तर्हि ङस्यापि ङणना इत्यर्थं इति, कथम् ? अत्रापि लण्सूत्रस्थाकारस्येत्संज्ञा-प्रतिज्ञेव नकारस्थाकारस्यापीत्संज्ञाप्रतिज्ञा करिष्यते। तेन ङप्रत्याहारे सिद्धे ञमयोर्ग्रहणं न भविष्यति। न च ञुट्मुडागमौ भविष्यतः। सिध्यति तु, किन्तु वचनानर्थ-क्यमाचार्यस्य भवति गौरवञ्च भवतीत्संज्ञा कल्पने, तथा च यथास्थानपौर्वापर्यक्रमहानिस्त्वत्रापि ङणनञ-ममित्यस्मिन् सूत्रे कृते। तस्माद्यथापूर्वमेवास्तु ञमङ-णनमिति। तेनाचार्यवचनानर्थक्यमपि न भवति गौर-श्चेत्संज्ञाप्रतिज्ञात्मकं न भवति। दर्भपवित्रपाणिः प्राङ्मुख आचार्यः सूत्राणि प्रणयति स्म तत्राशक्यं वर्णे-नाप्यनर्थकेन भवितुं किमियता सूत्रेण ङमो ह्रस्वादचि ङमुण्नित्यमित्यनेन। एवं तर्हि ङञणनमम् इति स्थान-पौर्वापर्येणैव पठेत्। ननु चोक्तं ञुट्मुडागमौ प्राप्नुतस्तौ तु प्राप्नुत एवात्रापि। ङमो ह्रस्वादचि ङमुण्नित्यम-ञमयोरिति वक्तव्यम्। एवं तर्हि अञमयोरिति पदेन महद् गौरवं भवति तस्मात्स एव दोषः। अत एव ञमङणनमेवोचितम्। तेन ङञणनममिकृते पाणिनीय-शब्दाऽनुशासनेऽकुप्रभाव इति वदतां मतमसाम्प्रतम्।

१३. अथ हलिति सूत्रे शषसानामूष्मणामनन्तरमुपदेशसत्त्वेऽपि पूर्वमेवायं हकारोपदेशो हयवरडिति कथं कृतः ? येन पुनरुक्तिदोषो जात इति चेत् न, पश्यत्याचार्योऽर्हेणे-त्यत्र अट्कुप्वाङिति सूत्रेण नस्य णत्वं न भविष्यतीति कृत्वा हकारोऽत्रावश्यकत्वात्पठितस्तेनार्हेणेत्यत्र णत्वं सिद्धं भवति। तथा च देवा हसन्तीत्यत्र हकारेऽशि

परे रोर्यादेशो भवति । तथा देवो हसतीत्यत्र हकारे हशि रो रुत्वं भवतिं । लिलिहिध्वे लिलिहिढ्वे इत्यत्र इणः परो य इट् ततः परेषां षीध्वंलुङ्लिटां धस्य वा मूर्धन्यो भवतीति वैकल्पिकं ढत्वं भवति । एवं तर्हि यवरहडिति चापि वक्तुं शक्यते तत्कथन्नोक्तमिति चेदुच्यते यण्-यर्-वल्-रलादिप्रत्याहारेषु हकारस्य ग्रहणं मा भूदित्येतदर्थमादावेव पठितः । यद्यपि अट्-अश्-हश्-इण्-विधिषु तु न क्षतिस्तथापि तं हसनीत्यत्रानुस्वारस्य ययि परसवर्णं इत्यनेन परसवर्णः प्राप्नोति, न चेष्टः । मैवं, रेफोष्मणां सवर्णा न सन्तीति कृत्वा न प्राप्तिः । ननु कात्यायनीये प्रातिशाख्ये हं इति नासिक्योऽप्युक्तः ।' मैवं यमा इवायमनुनासिकहकारोऽपि वन्ध्यापुत्रो ज्ञेयः । एवं तर्हि यण्सु मध्ये पठिते हकारे यथासंख्यमनुदेशो न प्राप्नोति, लृकारस्य हकारो वा । तस्मादादावेव युक्तस्तेन लृकारस्य लकार एव स्यादिति न हकारादेशप्राप्तिरिति । लृकारानन्तरं तु कृते अटि प्रत्याहारे ग्रहणं न भविष्यतीत्यलम् ।

१४. झभञ् घढधष् जबगडदश्—ननु सर्वथैव पृष्ठभागमेवाग्रे कृत्वा धावत्याचार्यः । पूर्वं ञमङणनमिति पञ्चमास्ततो झभघढधास्ततो जबगडदा इति क्रमशः चतुर्थतृतीयाः । तत्र तूक्तमनुनासिकप्रसङ्गादेव पञ्चमाः पूर्वं पठिताः; किन्त्वत्र को हेतुरिति ? श्रूयतां द्विधैव हि क्रमो भवति सव्योऽसव्यश्चेति । तत्र यस्यारम्भः कृतः, कृतः । न ह्याचार्याः कृत्वा निवर्तन्ते । कृतश्चेदावश्यकतया सव्यक्रमारम्भो ञमङणनमिति तत्र एव चतुर्थास्ततस्तृतीया झभघढध जबगडद इति । नन्वेवं तर्हि

क्रमशो घभझढधभा गजडदबाः स्युरनेन क्रमेण स्थान-पौर्वापर्येणेति। तत्रोच्यते यथावश्यक एव क्रमोऽत्रापि कृतः। येन यथासंख्यमनुदेशः समानामिति यथासंख्य-मादेशा भवन्तु। अत एव क्रमशो

ञ म ङ ण न पञ्चमाः

झ भ घ ढ ध चतुर्थाः

ज ब ग ड द तृतीयाः

तालव्यौष्ठ्यकण्ठ्यमूर्धन्यदन्त्याः।

यतो हि पश्यत्याचार्यः स्म पदान्तानां झलां स्थाने तृती-यवर्ग्यवर्णा आदेशा भवन्तीति। तस्मात् तृतीया वर्णाः पृथगेव पठितव्या इति कृत्वा पञ्चमाक्षरक्रमेणैव पठिता जबगडदेति तथैव चतुर्था अपि झभघढधेति स्थानिनोऽपि पठिता यथासंख्ययैव। ननु स्थानपौर्वापर्यक्रमे घ झ ढ ध भ ग ज ड द ब इति कृतेऽपि यथासंख्यमनुदेशः सिद्ध एव, यच्चोक्तं यथा पञ्चमवर्णक्रमस्तथा क्रमः कृतस्तदपि नोचितमनावश्यकत्वात्। एवं तर्हि आवश्य-क एवायं क्रमस्तथा च स्थानपौर्वापर्येणैवास्त्ययं क्रमः। इति कथं? श्रूयतां तावत्, पचध्वमित्यादौ अतो दीर्घो यञि इति सूत्रेण दीर्घो मा भूदिति झभयोरेव परयोर्दीर्घो भवत्विति कृत्वा झभौ पूर्वं पठितौ, ततो घढधेति तत्र झभयोः घढधानाञ्चोभयत्र स्थानपौर्वाप-र्येणैव क्रमः। यथा पञ्चमवर्णक्रमस्तु काकतालीयन्या-येनैव जातः। न तत्क्रमोऽनयोः क्रमे हेतुः। एवमपि झभ-ञिति पृथक् कृत्य द्वे सूत्रे किमर्थं कृते न तु झभघढधषि-ति तत्रोच्यते यञ्प्रत्याहारार्थः। यञ्प्रत्याहारे झभ-

योरेव ग्रहणं यथा स्यान्न तु घढधानामिति तेन पचध्व-मित्यत्र अतो दीर्घो यञोति दीर्घो न भवति।

१५· खफछठथचटतव्—कपय्—अत्रापि पूर्ववदेव सव्यक्रम एव। नन्वत्र तु वैलक्षण्यं दृश्यते। पूर्वक्रमानुसारेण वर्ग्याक्षराणां क्रमस्तु छफखठथ चपकटत एव स्यात्, तत्रो-च्यते स एव क्रमः फठथानां केवलं खछयोरेव स्थानपरि-वर्तनं कृतमाचार्येण। पश्यत्याचार्यः छठथचटतेष्वेव परेषु पदान्तस्य नकारस्य रादेशो भवति न तु खफयोः परयोरिति। तस्मात् तौ बहिष्कर्तुं प्रत्याहाराच्छखयोरेव स्थानपरिवर्तनं कृतं, ततो हि पठत्याचार्यो नश्छव्यप्रशा-निति तत्रैव छवि ग्रहणार्थमेव चटता अपि पठितास्तेन चक्रिंस्त्रायस्वेत्यत्र च नस्य रादेशो भवति तथैव चटयो-रपि परयोर्ज्ञेयम्। एवं तर्हि कप इति पृथक् किमर्थं प-ठितौ? एतयोरपि छवि ग्रहणं माभूदिति। अत्रापि चटत इति पूर्ववदेव क्रमो यथा ञमङणनमिति। ननु कपयोः कृतयोः प्रतिज्ञाहानिरेवाचार्यस्य सव्यक्रमस्येति चटतवत्तु पकय् इत्येव स्यादिति सर्वत्रौष्ठ्य एव पूर्वो न कण्ठ्य इति। एवं तर्हि पकौ वा कपौ न कश्चिद्विशेषो न हि प्रयोजनं पकार आदौ कृते, न वा ककार आदौ कृते। न वा काचिद्धानिरेव। नन्वसत्यपि प्रयोजने प्रतिज्ञाहा-निस्तु भवत्येव। सत्यम्, भवति तु प्रतिज्ञाहानिः। तर्हि किं पठितव्यम्? पकय् इत्येव पठितव्यम्। पठ्यतां तर्हि? नेति, ननु चोक्तं पकयित्येव वक्तव्यम्। श्रूयतां प्रयोजन-वशादेवाचार्येण ञमङणनमित्यस्य क्रमो गृहीतः। अत्र तु न किमपि प्रयोजनमिति कृत्वा स्थानपौर्वा-

पर्येण क्रमः कृतः कपयिति पूर्वं कण्ठ्यस्ततः ओष्ठ्यः। ननु चटतवित्यत्र प्रयोजनाभावेऽपि कथं ञमङणनमित्यस्य क्रमो गृहीतः ? नन्वत्रापि यथास्थानपौर्वापर्येणैव क्रमश्चटत इति तालव्यमूर्धन्यदन्त्या इति । निष्प्रयोजनं न गृह्णन्त्याचार्याः सव्यतामिति । ननु चोक्तं प्रतिज्ञाहानिस्तु भवति ? न भवति; यत्र यत्र प्रयोजनं तस्मै प्रतिज्ञा। न चात्र किञ्चित्प्रयोजनमिति कृत्वा न प्रतिज्ञा, । न हि निरर्था प्रतिज्ञा क्रियत आचार्यैः । सा प्रतिज्ञात्र न प्रवर्तते प्रयोजनाभावात् । तत्र पश्यत्याचार्य इति पदेन सर्वत्र लोके स्वाभाविकोच्चारणपरिवर्तनं भवतीति विज्ञेयं तद्यथा रामश्चिनोति तद्धितमित्यादौ शत्वषत्वमिति ।

१६. शषसर्-हल्.—तत्रेम ऊष्माणो वर्णाः सर्वान्ते पठिताः। अत्रापि तालव्यमूर्धन्यदन्त्या यथास्थानक्रमं पठिताः । पश्यत्याचार्यः शषसेषु परेषु विकल्पेन विसर्गस्य विसर्ग एव भवति तस्मादेव हकारमूष्माणं पृथक् कृत्यैव पठितं हलिति । तेन हरिः शेते हरिश्शेते हरिः षष्ठः हरिष्षष्ठः हरिः सर्पति हरिस्सर्पति सिद्धाः तथा च हरिश्चिनोति इत्यत्र रामस्त्रायत इत्यत्र न प्रवर्तते स विधिः। तथैव यर्-झर्-खर्-विधिष्वपि ज्ञेयम् । हलिति सूत्रं पृथक्कृतं येन अन्तर्हासः हरिर्हंसतीत्यादौ वा शरीति वैकल्पिकविधिर्न प्रवर्तते। मैवं हयवरडिति सूत्रे हकारोपदेशः कृतः। न च स हकारः शरि प्रत्याहारेऽस्ति । तस्मानायं दोष उपपद्यते वा शरीति । तस्मान्नात्र पुनरुपदेशस्यावश्यकता हलिति । एवं तर्ह्यन्यदेव प्रयोज-

नम् । किं तत् ? पश्यति सूक्ष्मदृष्टिराचार्यो वलादिलक्षणो य इडागमः स स्वपिहि रुदिहीत्यत्र न प्राप्स्यति । दृश्येते श्रूयेते च लोके सेटौ । तस्मात्सकृदुपदिष्टेऽपि हकारे, पुनरुपदिष्टं हलिति । ननु पुनरुक्तिदोषस्तु भवति। भवतुनाम कार्यसिद्धिस्तु भवति वलादिलक्षण इडिति । न क्वचिदप्याचार्येण प्रतिज्ञातं न किमपि वर्णं पुनः पठिष्यामीति । तथा च झल् शल् विधिष्वपि ज्ञेयम् ।

तदेतेन विज्ञातं भवति सूक्ष्मातिसूक्ष्मा व्यापिका विशदा महती दूरदर्शिनी चाचार्यस्य बुद्धिरासीत् । महतोऽपि महीयान्खलु शब्दसिन्धुः, बृहस्पतिश्च प्रवक्ता इन्द्रश्चाध्येता दिव्यं वर्षसहस्रमध्ययनकालो न चान्तं जगामेति पतञ्जलिराह स्वभाष्ये । तथापि शब्दसिन्धुरेष बिन्दुवदेव परिदृश्यते स्माचार्येण पाणिनिना। किं किं लोके व्यवह्रियते, क्व क्व कः को विधिः कार्यः, क्व यण्, क्व गुणः, क्व च वृद्धिरिति । तथा च क्व सवर्णदीर्घः क्व क्व च जश्त्व-रुत्व-यत्व-विसर्जनीयत्वादय इति । तत्सर्वं परितो विविच्य विविच्यैव चतुर्दश प्रत्याहारसूत्राणि प्रणीतानि लाघवार्थम् । ततो व्याकरणसूत्राणि चतुःसूत्रोनचतुःसहस्राणि ३९९६ । तदेतेन सम्यग्ज्ञायतेऽकिञ्चना एव वयं पूर्वाचार्याणां समक्ष इत्यलम् ।

१७. ननु कथं ज्ञायते सूत्राणीमानि पाणिनिकृतान्येव ? पतञ्जलिवचनाभ्याम्। तत्रोक्तं महाभाष्ये फणिना हयवरडिति सूत्रे "एषा ह्याचार्यस्य शैली लक्ष्यते यत्तुल्यजातीयांस्तुल्यजातीयेषूपदिशति अचोऽक्षु हलो हल्सु" तथा

च वृद्धिरादैजिति सूत्रे च वृद्धिरादैच् पदसाधुत्वदर्शनायोक्तम् "कृतमनयोः साधुत्वम् । कथम् ? वृधिरस्मायविशेषेणोपदिष्टः प्रकृतिपाठे तस्मात् क्तिन् प्रत्ययः । आदैचोऽप्यक्षरसमाम्नाय उपदिष्टाः" । तत्राचार्यपाणिनेरेवोपदेशः स्पष्टः सूत्राणाम् ।

१८. आपिशलेर्वैतानि सूत्राणि, पाणिनिना पठितानि न तु पाणिनिना कृतानि । कथमिति चेत् फणिना पाणिनिनाम्ना निर्देशात् । आपिशलशिक्षासूत्रेषु ञमङणनमिति सूत्रक्रमदर्शनाच्च ज्ञायते आपिशलेरेव सूत्राणि । तत्रापिशलव्याकरणलोपादस्माभिर्न ज्ञायते यदेतानि सूत्राण्यापिशलानीति । सर्वत्र पाणिनिरनुकरोत्यापिशलिम् । कुत्र ? व्याकरणे च शिक्षायाश्च, तथैवात्रापि ज्ञेयम् ।

१९. ननु ढक्काजानि माहेश्वराणीति जनश्रुतिः ?

२०. नैवम्, शिवे श्रद्धातिरेकाद् भक्तैः माहेश्वरसम्प्रदायैः प्रसिद्धीकृता । तत्र न किमपि बीजम् । फणिवचनविरुद्धत्वाच्चेति शम् ॥

इति सप्तदशोऽध्यायः

# अथ परिभाषाविज्ञानीयनामा
## अष्टादशोऽध्यायः

१. शिक्षा—शिक्ष्यन्ते वर्णाः शिक्ष्यते च वर्णोच्चारणविधिर्यया सा शिक्षा ।

२. अक्षरम्—न क्षरतीत्यक्षरम्, अविनाशीत्यर्थः ।

३. वर्णाः—वर्ण्यते भावो यैस्ते वर्णाः । वर्णावद्भेदकत्वाद्वा वर्णाः ।

४: स्वराः—स्वयमेव राजन्ते, स्वेन रूपेणान्यवर्णसाहाय्येन विनैव राजन्त उच्चार्यन्त इति स्वराः ।

५. व्यञ्जनम्—व्यञ्जयन्ति स्फोटात्मकस्वरूपमिति व्यञ्जनम् । अन्वग्भवति वा । स्वरमनु अक्तिर्व्यक्तिर्यस्य तद् व्यञ्जनम् ।

६. मात्रा—निमेषकालो मात्रोच्यते ।

७. ह्रस्वः—एकमात्रिको ह्रस्व उच्यते ।

८. दीर्घः—द्विमात्रिको दीर्घ उच्यते ।

९. प्लुतः—त्रिमात्रिकः प्लुत उच्यते ।

१०. उदात्तः—उच्चैरुच्चारित उदात्त उच्यते ।

११ अनुदात्तः—नीचैरुच्चारितोऽनुदात्त उच्यते ।

१२ स्वरितः—मध्योच्चारितः स्वरित उच्यते ।

१३. अनुनासिकः— मुखसहितनासिकयोच्चारितोऽनुनासिक उच्यते ।

१४. अननुनासिकः—नासिकायोगेन विनैवोच्चारितोऽननुनासिक उच्यते ।

१५. अयोगवाहः—अयोगेनैव वहति कार्यमित्ययोगवाहः ।

१६. स्पर्शाः—स्पृशति करणं स्थानं येषामुच्चारणे ते स्पर्शाः ।

१७. अन्तःस्थाः—येषां वर्णानामुच्चारणेऽन्तर्मध्ये स्थितं करणं ते अन्तःस्थाः ।

१८. ऊष्माणः—ऊष्मा प्रजायते येषामुच्चारणे त ऊष्माणः ।

१९. अनुस्वारः—स्वरमनु प्रयुज्यत इत्यनुस्वारः ।

२०. विसर्गः—विसृज्यते वाक्यमनेनेति विसर्गः, विविधं वा सृज्यते शत्व-षत्व-सत्वाद्यादेशरूपैरिति विसर्गः ।

२१. स्थानम्—वर्णोच्चारणसमयेऽपि तिष्ठति निश्चलत्वेनेति स्थानमूर्ध्वपंक्तिः ।

२२. करणम्—क्रियत उच्चारणमनेनेति करणम् । अधःपंक्तिः करणानाम् ।

२३. प्रयत्नः—प्रकर्षेण यतनं प्रयत्नः ।

२४ स्थानपीडनम्—स्थानेषु वायोः पीडनं स्थानपीडनम् ।

२५. समाम्नायः—समाहृत्यानीता वर्णा यत्रासौ समाम्नायः ।

इत्यष्टादशोऽध्यायः

# अथ प्रत्याख्यातविज्ञानीयनामा

## एकोनविंशोऽध्याय

१. तत्र ऋ लृ वर्णयोः स्वाभाविकस्वरत्वं प्रत्याख्यातं वेदितव्यं कृत्रिमत्वात् ।

२. जिह्वामूलीयः प्रत्याख्यातो वेदितव्यः ।

३. उपध्मानीयोऽपि प्रत्याख्यातो वेदितव्यः ।

४. यमा अपि प्रत्याख्याता वेदितव्याः ।

५. ळकार ळहकारावपि प्रत्याख्यातौ वेदितव्यौ ।

६. क्षस्य छकारोच्चारणं प्रत्याख्यातं वेदितव्यम् ।

७. ज्ञस्य ग्यंकाराद्युच्चारणं प्रत्याख्यातं वेदितव्यम् ।

८. षस्य खकारोच्चारणं प्रत्याख्यातं वेदितव्यम् ।

९. यस्य जकारोच्चारणं प्रत्याख्यातं वेदितव्यम् ।

१०. ॶ इत्यस्य ग्वं इत्युच्चारणं प्रत्याख्यातं वेदितव्यम् ।

११. खकारस्य लिपिः प्रत्याख्याता वेदितव्या ।

१२. इकारस्य व्यञ्जनेषु मात्रालिपिः प्रत्याख्याता वेदितव्या ।

१३. वकारस्य दन्तौष्ठस्थानं प्रत्याख्यातं वेदितव्यम् ।

१४. जिह्वामूलस्य स्थानत्वं प्रत्याख्यातं वेदितव्यम् ।

१५. उपध्मेत्यस्य स्थानत्वं प्रत्याख्यातं वेदितव्यम् ।

१६. हनुमूलस्य करणत्वं प्रत्याख्यातं वेदितव्यम् ।

१७. ळ, ळह, ड़, ढ़ः=इमेऽपि चत्वारो वर्णाः सम्प्रति लौकिकै-

रुच्चार्यमाणा अपभ्रंशा एव। तत्र ळ ळ्हौ तु प्राचीनौ ड़ ढ़ौ तु नवीनौ। यत्तु लोके सार्द्धंत्रयमित्यादिस्थाने साढ़े तीनाद्युच्चारणं क्रियते तत्र द्धं इत्यस्यैव ढ़ इत्युच्चारण-मपभ्रंश एव स्वतः सिद्धं तथैव पीडा इत्यस्य स्थानेऽपि पीड़ा इत्यननुनासिकणकारवदुच्चार्यंते। न चाननुना-सिकणकारोऽस्तीति ड़ोच्चारणमप्यपभ्रंश एव। तत्र यथा डढयोः स्थाने ड़ढ़ावादेशौ ब्रुवन् कश्चिद् वैयाकरणो हास्यास्पदो भविष्यति तथैव डढयोः स्थाने ळ ळ्हावप्य-देशौ ब्रुवन्तोऽपि हास्यास्पदा एव ज्ञेयाः। तस्मात् ळ ळ्हौ न सन्तातिं ब्रुवन्तौ माध्यन्दिनीयाः साधव एव।

तद्यथोक्तं शुक्लयजुःप्रातिशाख्ये—

"तस्मिन् ळ ळ्हजिह्वामूलीयोपध्मानीयनासिक्या न सन्ति माध्यन्दिनानाम्" (अ० ८ सू० ४५) तस्मादिमेऽपि वर्णाः प्रत्याख्याता एव ज्ञेयाः।

अथ को नासिक्यः ? हुं इति। न स माध्यन्दिनीयानां मते भवति। तथैव मम मतेऽपि यमा अपि न भवन्ति। न तु ङञणनमा न भवन्ति। ते तु सन्त्येव।

इति एकोनविंशोऽध्यायः

# अथ स्थान-प्रयत्न-स्थानपीडन-देवता-चक्र-विज्ञानीयनामा

## विंशोऽध्यायः

| स्थानचक्रम् | |
|---|---|
| वर्णाः | स्थानम् |
| अ क ख ग घ ङ ह : | कण्ठः |
| इ च छ ज झ ञ य श | तालु |
| ऋ ट ठ ड ढ ण र ष | मूर्धा |
| ऌ त थ द ध न ल स | दन्ताः |
| उ प फ ब भ म व | ऊर्ध्वौष्ठः |
| ङ ञ ण न म | नासिका च |
| व | सृक्किणी |
| ए ऐ | कण्ठतालु |
| ओ औ | कण्ठौष्ठम् |
| ं | नासिका |

## अन्तःप्रयत्नचक्रम्

| वर्णाः | | अन्तःप्रयत्नः |
|---|---|---|
| अ इ ऋ लृ उ ए ऐ ओ औ | | विवृतम् |
| अ | | संवृतम् |
| क ख ग घ ङ | स्पर्शाः | स्पृष्टम् |
| च छ ज झ ञ | स्पर्शाः | स्पृष्टम् |
| ट ठ ड ढ ण | स्पर्शाः | स्पृष्टम् |
| त थ द ध न | स्पर्शाः | स्पृष्टम् |
| प फ ब भ म | स्पर्शाः | स्पृष्टम् |
| य र ल व | अन्तःस्थाः | ईषत्स्पृष्टम् |
| श ष स ह | ऊष्माणः | ईषद्विवृतम् |

## बाह्यप्रयत्नचक्रम्

| वर्णाः | बाह्यप्रयत्नः | | |
|---|---|---|---|
| अ इ ऋ लृ उ | उदात्तः | अनुदात्तः | स्वरितः |
| ए ऐ ओ औ | ,, | ,, | ,, |
| क ख | विवारः | श्वासः | अघोषः |
| च छ | ,, | ,, | ,, |
| ज झ | ,, | ,, | ,, |
| ट ठ | ,, | ,, | ,, |
| त थ | ,, | ,, | ,, |
| प फ | ,, | ,, | ,, |
| श ष स | ,, | ,, | ,, |
| | (एते स्वाभाविका बाह्यप्रयत्नाः) | | |
| ग घ ङ | संवारः | नादः | घोषः |
| ज झ ञ | ,, | ,, | ,, |
| ड ढ ण | ,, | ,, | ,, |
| द ध न | ,, | ,, | ,, |
| ब भ म | ,, | ,, | ,, |
| य र ल व | ,, | ,, | ,, |
| ह | ,, | ,, | ,, |
| | (एतोऽस्वाभाविका बाह्यप्रयत्नाः) | | |

## प्राणचक्रम्

| वर्णाः | बाह्यप्रयत्नाः |
|---|---|
| ग घ ङ | अल्पप्राणः (स्वाभाविकः) |
| च ज ञ | ,, ,, ,, |
| ट ड ण | ,, ,, ,, |
| त द न | ,, ,, ,, |
| प ब म | ,, ,, ,, |
| य र ल व ं | ,, ,, ,, |
| ख घ | महाप्राणः (अस्वाभाविकः) |
| छ झ | ,, ,, ,, |
| ठ ढ | ,, ,, ,, |
| थ ध | ,, ,, ,, |
| फ भ | ,, ,, ,, |
| श ष स ह ः | ,, ,, ,, |

## बाह्यप्रयत्नचक्रम्

| वर्णाः | | बाह्यप्रयत्नाः |
|---|---|---|
| अ इ ऋ ऌ उ ए ऐ ओ औ | | उदात्तानुदात्त-स्वरिताः |
| क ख | ग घ ङ | विवारः |
| च छ | ज झ ञ | श्वासः |
| ट ठ | ड ढ ण | अघोषः |
| त थ | द ध न | संवारः |
| प फ | ब भ म | नादः |
| श ष | ह य व | घोषः |
| स | र ल | |
| विवार-श्वास-अघोषाः | संवारनाद-घोषाः | |

# प्राणचक्रम्

अल्पप्राणाः

क ख ग घ ङ य

च छ झ ज ञ र श

ट ठ ड ढ ण ल ष

त थ द ध न व स

प फ ब भ म ह

महाप्राणाः

अल्पप्राणाः

महाप्राणाः

# बाह्यप्रयत्नविशेषचक्रम्

| विवारश्वासाघोषाल्पप्राणाः | विवारश्वासाघोषमहाप्राणाः | संवारनादघोषाल्पप्राणाः | संवारनादघोषमहाप्राणाः | संवारनादघोषाल्पप्राणाः |
|---|---|---|---|---|
| क | ख | ग | घ | ङ |
| च | छ | ज | झ | ञ |
| ट | ठ | ड | ढ | ण |
| त | थ | द | ध | न |
| प | फ | ब | भ | म |
| अननुनासिकाः | | | | अनुनासिकाः |

य र ल व—संवारनादघोषाल्पप्राणाः

श ष स—विवारश्वासाघोषमहाप्राणाः

ह—संवारनादघोषमहाप्राणः

## अन्तःकरणचक्रम्

| वर्णाः | करणम् |
|---|---|
| कण्ठ्यानां | जिह्वामूलम् |
| तालव्यानां | जिह्वामध्यम् |
| मूर्धन्यानां | जिह्वोपाग्रम् |
| दन्त्यानां | जिह्वाग्रम् |
| औष्ठ्यानां | अधरौष्ठम् |

## बाह्यकरणचक्रम्

| वर्णाः | करणम् |
|---|---|
| सर्ववर्णानां | उरः |
| सर्ववर्णानां | कण्ठः |

## स्थानपीडनचक्रम्

| वर्णाः | वाताभिघातः |
|---|---|
| क ख ग घ ङ | लौहपिण्डवत् |
| च छ ज झ ञ | ” ” |
| ट ठ ड ढ ण | ” ” |
| त थ द ध न | ” ” |
| प फ ब भ म | ” ” |
| य र ल व | काष्ठपिण्डवत् |
| श ष स ह | ऊर्णापिण्डवत् |
| अ इ उ ऋ ऌ ए ऐ ओ औ | शाल्मलिकार्पास-पिण्डवत् |

# देवताचक्रम्

| वर्णाः | देवता |
|---|---|
| अ क ख ग घ ङ ह : | अग्निः |
| इ च छ ज झ ञ य श | सोमः |
| ऋ ट ठ ड ढ ण र ष | वायुः |
| ऌ त थ द ध न ल स | रुद्रः |
| उ प फ ब भ म व | अश्विनौ |
| ं (अनुस्वारः) | विश्वे देवाः |
| संयुक्ताक्षराणाम् | यथायोगं द्वे द्वे[1] |

| वर्णाः | संज्ञा |
|---|---|
| कण्ठ्याः | आग्नेयाः |
| तालव्याः | सौम्याः |
| मूर्धन्याः | वायव्याः |
| दन्त्याः | रौद्राः |
| औष्ठ्याः | आश्विनाः |
| शेषाः | वैश्वदेवाः |
| कण्ठ्यतालव्यौ | अग्नीषोमीयौ |
| कण्ठ्यौष्ठ्यौ | आग्न्यश्विनौ |

१. ए ऐ इत्येतौ अग्नीषोमीयौ, ओ औ इत्येतौ आग्न्यश्विनौ ।

## चतुर्दशसूत्रचक्रम्

| | | |
|---|---|---|
| स्वराः | अ इ उ ऌ ॡ | विवृताः सानुनासिकनिरनुनासिकाः |
| | ए ओ | विवृततरौ ,, |
| | ऐ औ | विवृततमौ ,, |
| अन्तःस्थाः | य र ल व | यण् ,, |
| स्पर्शाः | ञ म ङ ण न | पञ्चमाः सानुनासिकाः |
| | झ भ घ ढ ध | चतुर्थाः निरनुनासिकाः |
| | ज ब ग ड द | तृतीयाः ,, |
| | ख फ छ ठ थ | द्वितीयाः ,, |
| | च ट त क प | प्रथमाः ,, |
| ऊष्माणः | श ष स ह | शलः ,, |

यानि मे साधूनि मतानि तानि युष्माभिर्मन्तव्यानि, नो इतराणि ।

यानि मे सुविचारितानि तानि युष्माभिर्मन्तव्यानि, नो इतराणि नो इतराणि ।

इति पुष्करतीर्थक्षेत्रीयविरञ्च्यावासग्रामाभिजनस्य वाराणसेयपाणिनिमहाविद्यालयप्राचार्यस्य भारद्वाजगोत्रस्य विद्वत्कुलपूजितस्य चतुर्दिग्लब्धकीर्तेरनवरतज्ञानोदधिनिमज्जनगृहीतनानामूल्यरत्नस्य युधिष्ठिरमीमांसकाचार्यस्य, वाराणसेयसंस्कृतविश्वविद्यालयवेदान्तविभागाध्यक्षसर्वशास्त्रविशारदस्य नानादेशागतान्तेवासिसहस्रप्रणमन्मूर्धालंकृतपादपङ्कजस्य बालेयाजनपदीयच्छातग्रामनिवासिनः श्रीरघुनाथशर्मणो, व्याकरणविभागाध्यक्षविद्वच्छिरोमणिपण्डितवरेण्यस्य गोरक्षपुरनिवासिन आचार्यमुरलीधरमिश्रस्य, पाञ्चालप्रदेशीयरोपड़मण्डलान्तर्गतचूर्णियांग्रामवासिनो वाराणसेयार्जुनायुर्वेदमहाविद्यालयप्राचार्यस्य श्रीलालचन्द्रवैद्यस्य च शिष्येण सांख्य-योग-व्याकरणायुर्वेदाचार्येण वाराणसेयसंस्कृतविश्वविद्यालयस्नातकेन बालार्कजनपदीयहिमगिर्युपत्यकाप्रसिञ्चनपटुसरयूतटसमुल्लसन्महिषीग्रामवासिना चित्रगुप्तगोत्रोत्पन्नेन पेंशनगर्भंजेन परमाणुदर्शनकारेणोत्तरप्रदेशराजकीयचिकित्साधिकारिणा जगदीशाचार्येण प्रणीतम् इदं

शिक्षा-शास्त्रम् समाप्तम् ।

शुभं भवतु लेखकपाठकानाम् ।

कल्याणं भवतु वर्णोच्चारणविद्याम् अधिजिगमिषूनाम् ।

# अथ संख्याविज्ञानीयं नाम
## प्रथमं परिशिष्टम्

१. सम्यक् ख्यायन्ते संख्यायन्ते वस्तूनि यया सा संख्येति विज्ञेया।

२. ब्रह्मणः परमाणुमात्रापर्यन्ता हि सा।

३. तस्मादेकादिरनन्तान्ता संख्या भवति। जीवेभ्योऽपि परमाणूनामनन्तगुणत्वात्।

४. यावन्तो हि जीवाः सन्ति तावन्ति शरीराणि, प्रतिशरीरं च परमाणूनामसंख्येयत्वात्।

५. एकं हि ब्रह्मानन्ताश्च परमाणवः।

६. सर्वज्ञत्वाद् ब्रह्मणा संख्येयत्वेऽप्यस्माभिरल्पज्ञत्वाद-संख्येया जीवाः परमाणवश्च।

७. तत्र लोकव्यवहारार्थं परिकल्पितांशेन।

८. एकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशेति।

९. ततश्चैकादशद्वादशत्रयोदशचतुर्दशपञ्चदशषोडशसप्तदशा-ष्टादशैकोनविंशतिविंशतीति।

१०. ततश्चैकविंशतिद्वाविंशतित्रयोविंशतिचतुर्विंशतिपञ्चविंश-तिषड्विंशतिसप्तविंशत्यष्टाविंशत्येकोनत्रिंशत्त्रिंशदिति।

११. ततश्चैकत्रिंशतश्चत्वारिंशत्पर्यन्ता।

१२. ततश्चैकचत्वारिंशः पञ्चाशत्पर्यन्ता।

१३. ततश्चैकपञ्चाशतः षष्टिपर्यन्ता ।

१४. ततश्चैकषष्टेः सप्ततिपर्यन्ता ।

१५. ततश्चैकसप्ततेरशीतिपर्यन्ता ।

१६. ततश्चैकाशीतेर्नवतिपर्यन्ता ।

१७. ततश्चैकनवतेः शतपर्यन्ता ।

१८. ततः सहस्रलक्षकोट्यर्वखर्वनीलपद्मशंखमहाशंखान्ता ।

१९. तत्र दशशतानां सहस्रम् ।

२०. शतसहस्राणां लक्षम् ।

२१. शतलक्षाणां कोटिः ।

२२. शतकोटीनामर्वः ।

२३. शतार्वाणां खर्वः ।

२४. शतखर्वाणां नीलम् ।

२५. शतनीलानां पद्मम् ।

२६. शतपद्मानां शंखः ।

२७. शतशंखानां महाशंख; अग्रेऽनवस्थया विरामः ।

२८. तत्र गणितार्थं तावदेका-दश-शत-सहस्र-दशसहस्र-लक्ष-दशलक्ष-कोटि-दशकोटि--अर्व-दशार्व--खर्व-दशखर्व-नील-दशनील-पद्म-दशपद्म-शंख-दशशंख-महाशंखेति क्रमः ।

इति संख्याविज्ञानीयं नाम

प्रथमं परिशिष्टम्

# अथाङ्कविज्ञानीयनाम

## द्वितीयं परिशिष्टम्

१. अङ्क ते संख्या येन सोऽङ्कः ।

२. अङ्कचिह्ने पर्यायौ ।

३. तत्रैकस्य त्वेका रेखा । लोके १ इति

४. द्वयो रेखाद्वयम्  ,, २ इति

५. त्रयाणां रेखात्रयम् ।।। ,, ३ इति

६ चतुर्णां रेखाचतुष्टयम्  ,, ४ इति

७. पञ्चानां रेखापञ्चकम्  ,, ५ इति

८. षण्णां रेखाषट्कम्  ,, ६ इति

९. सप्तानां रेखासप्तकम्  ,, ७ इति

१०. अष्टानां रेखाष्टकम्  ,, ८ इति

११. नवानां रेखानवकम्  ,, ९ इति

१२. शून्यस्य लोके ० इति

१३. न नवभ्यो बृहदङ्को नवैकस्माद्दल्पोऽङ्कः ।

१४. एको महामूलम्

१५. तस्माच्छून्ययोगादेव दशतिर्दश १० इति ।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| १६. ततश्च | ११ | १२ | १३ | १४ | १५ | १६ | १७ | १८ | १९ | २० |
| ,, | २१ | २२ | २३ | २४ | २५ | २६ | २७ | २८ | २९ | ३० |
| ,, | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३७ | ३८ | ३९ | ४० |
| ,, | ४१ | ४२ | ४३ | ४४ | ४५ | ४६ | ४७ | ४८ | ४९ | ५० |
| ,, | ५१ | ५२ | ५३ | ५४ | ५५ | ५६ | ५७ | ५८ | ५९ | ६० |
| ,, | ६१ | ६२ | ६३ | ६४ | ६५ | ६६ | ६७ | ६८ | ६९ | ७० |
| ,, | ७१ | ७२ | ७३ | ७४ | ७५ | ७६ | ७७ | ७८ | ७९ | ८० |
| ,, | ८१ | ८२ | ८३ | ८४ | ८५ | ८६ | ८७ | ८८ | ८९ | ९० |
| ,, | ९१ | ९२ | ९३ | ९४ | ९५ | ९६ | ९७ | ९८ | ९९ | १०० |

इति

१७. गणतार्थन्तु—

| | |
|---|---|
| १ | एकम् |
| १० | दश |
| १०० | शतम् |
| १००० | सहस्रम् |
| १०००० | दशसहस्रम् |
| १००००० | लक्षम् |
| १०००००० | दशलक्षम् |
| १००००००० | कोटि |
| १०००००००० | दशकोटि |
| १००००००००० | अर्वः |
| १०००००००००० | दशार्वः |
| १००००००००००० | खर्वः |
| १०००००००००००० | दशखर्वः |
| १००००००००००००० | नोलम् |
| १०००००००००००००० | दशनीलम् |
| १००००००००००००००० | पद्मम् |
| १०००००००००००००००० | दशपद्मम् |
| १००००००००००००००००० | शंखः |
| १०००००००००००००००००० | दशशंखः |
| १००००००००००००००००००० | महाशंखः |

इत्यनवस्थया विरामः

इत्यङ्कविजानीयं नाम

द्वितीयं परिशिष्टम्

# संशोधनं परिष्करणं च

| पृष्ठे | सूत्रे | मुद्रितपाठस्थान इत्थं पठनीयम् |
|---|---|---|
| ८ | ५ | ……मूलाधरौष्ठ…… । |
| १२ | १० | ……ईषत्स्पर्शत्वात् स्वरव्यञ्जनयोरन्तःस्थितत्वात्…… । |
| १२ | ११ | ……वायुवेगाधिक्याद् ईषदेव विवृतत्वात् किञ्चिद् वातावरोधादूष्माच्चोष्मा…… । |
| १४ | १२ | ……विरुद्धौ चैतौ…… । |
| २२ | २८ | ……स्थानपौर्वापर्येणैव क्रमः सम्भव इति नात्रापि क्रमवैज्ञानिकताहानिः । |
| २६ | ६ | ……ज्ञानार्थम्, यदिमे दोषा…… । |
| २७ | ७ | (पं० १४) ……यमान्नापद्यन्ते तेनैव तर्केण 'प्रथमवर्गीया अपञ्चमस्पर्शाः कण्ठ्या एव स्वान् यमानापद्यन्त इति पक्षोऽपि…… । |
| २७ | ७ | (पं० २१) ……पठिताः, तथैव यमा अपि नोपदेश्याः कादिषु सकृदुपदिष्टेषु । |
| ३९ | १ | नन्वयमपरोऽप्य…… । |
| ४० | १२ | ञमङणनम्—सर्वे यणः…… । 'रेफवर्जिताः' इत्यंशो निष्काशनीय इत्यर्थः । |
| ४९ | ७ | सूत्रादग्रे—शास्त्रम्—'शास्ति स्वाधिकृतं विषयं यत्तच्छास्त्रम् ।' इति सूत्रं वर्धनीयम् । |
| ५१ | ६ | सूत्रादग्रे—'बकारस्य बकारोच्चारणं प्रतिषिद्धम् ।' इति सूत्रं वर्धनीयम् । |